Sanskrit Sahitya Parishat Series No. 15.

# PRAS'ASTAPĀDABHĀSYAM

With Sūkti on the Bhāṣya

By

JAGADĪS'A TARKĀLANKARA

EDITED WITH

Sūktidīpikā and Bengali elucidation etc. etc.

BY

KĀLĪPADA TARKĀCHĀRYA

ADHYĀPAKA, SANSKRIT SAHITYA PARISHAT.

Published by

THE SANSKRIT SAHITYA PARISHAT.

*Shyambazar, Calcutta.*

Price { *for members* 1/8/-
*for others* 2/-

संस्कृतसाहित्यपरिषद्ग्रन्थमालायां १५श-संख्या

वैशेषिकदर्शने

# प्रशस्तपादभाष्यम्

[ द्रव्यग्रन्थात्मकम् ]

## जगदीशसूक्तिसहितम्

संस्कृतसाहित्यपरिषदाचार्य्य-

श्रीकालीपदतर्काचार्य्येण

स्वकृतसूक्तिदीपिकाख्यटीका-वङ्गभाषामयभाष्यतात्पर्य्य-

प्रभृतिभिः समलङ्कृत्य सम्पादितम्




कलिकाता-संस्कृतसाहित्यपरिषद्भवनात्

प्रकाशितम्

मूल्यम् रूप्यकद्वयम् सभ्यानां सार्द्धरूप्यकम्

# INTRODUCTION*

## Vaiśeṣika Sūtra of Kaṇāda and commentaries on it

The Vaiśeṣika school of Kaṇāda is one of the most important of the six orthodox schools of Indian philosophy. And various commentaries and sub-commentaries have grown round this system as round all the rest. Of the many commentaries on the *Vaiśeṣika-sūtras* of Kaṇāda the *Praśastapādabhāṣya* is the most important and renowned. This and another commentary—the *Vaiśeṣika-upaskāra* of Śaṅkara-Miśra have already been published. Besides these already published ones there were other commentaries as well on these sūtras. Thus Pandit Vindhyeśvarīprasāda in his edition of *Praśastapādabhāṣya* with *Nyāyakandalī* refers to a *Bhāradvāja-vṛtti* which book he is stated to have seen with a sanyāsin at Benares. There is reference also to a *Rāvaṇabhāṣya* in the comment on *Kiraṇāvalīprakāśa* by Padmanābha where the former is stated to have been used by Udayana in composing his *Kiraṇāvalī*. *Kaṇādarahasya* of Śaṅkara Miśra and *Nyāyalīlāvatī* of Vallabhāchārya seem to have been two more commentaries on the Vaiśeṣikasūtras, rather than on Praśastapāda as some scholars are inclined to suppose.

## Commentaries on Praśasta-pādabhāṣya

Now, Praśastapādabhāṣya which is more of the nature of an independent work rather than a *bhāṣya* in the strict sense of the term has, in its turn, a good many commentaries on it. Of these *Kiraṇāvalī* of the famous logician Udayana and *Nyāyakandalī* of Śrīdharāchārya have already been edited and published. Other commentaries on it are *Dravyabhāṣya-sūkti* or *Dravyabhāṣyaṭīkā* by the famous Naiyāyika Jagadiśa Tarkālaṅkāra, *Vyomavatī* by Vyomaśivāchārya, *Setu* by

---

* An English summary of the elaborate Sanskrit Introduction of the editor by Chintaharan Chakravarti M. A.

Padmanābha Miśra, which all are being printed in the Benares Chowkhamba Series Besides these there is the *Līlāvatī* of Śrīvatsācārya. Aufrecht in his *Catalogus Catalogorum* refers to two more commentaries by Mallināth and Śālika-nātha. In this connection mention should be made of *Daśapadārthaśāstra* of Chandra, a treatise based on *Praśastapādabhāṣya* and composed about 600 A.D. This last work is now preserved in its Chinese version alone

## Time and works of Jagadīśa

Jagadīśa flourished sometime about 1600 A. D. He was fourth in descent from Sanātana Miśra, father-in-law of Chaitanya, the great Vaiṣṇava reformer who was born in 1485 A. D. Allowing 30 years in average for one generation this gives 1605 A. D. as the time of Jagadīśa. This date is supported by a copy of a manuscript of his *Tarkāmṛta* which was copied in 1631 A. D.[1]

He is well-known through his Nyāya works. Thus he is famous as the author of *Tattvachintāmaṇidīdhitiprakāśikā*, popularly known as *Jāgadīśī Ṭīkā*, a commentary on *Tattvacintāmaṇidīdhiti* of Raghunātha, itself a commentary on *Tattvachintāmaṇi* of Gaṅgeśa—father of Navya Nyāya. His comment directly on the work of Gaṅgeśa—*Tattvacintāmaṇimayūkha*—is available only in fragments. Other exegetical works of him pertain to the Vaiśeṣika system. They are *Dravyabhāṣyaṭīkā* and *Nyāyalīlāvatīvyākhyā* which is a commentary on *Nayāyalīlāvatī* of Vallabhāchārya. His independent works are *Nyāyasārāvalī* which deals with the doctrine of causality, *Śabdaśaktiprakāśikā*, a grammatico-philosophical treatise and *Tarkāmṛta*. A *Kāvyaprakaśarahasyaprakāśa* is attributed to him by some scholars[2] but apparently without sufficient

1 *History of Indian Logic*—S. C. Vidyabhūṣaṇa—p. 469-70.

2 *Notices of Sanskrit Manuscripts*—R. L. Mitra—vol. IV. p. 224-5.

ground, as from its colophon it is clearly known to be the work of Jagadīśa Tarkapañchānana and not of *our* Jagadīśa Tarkālaṅkāra, the famous Naiyāyika.

## A more detailed account of Dravyabhāṣyaṭīkā

The commentary of Jagadīśa on Praśastapādabhāṣya is known by various names. One manuscript of the book calls it *Dravyabhāṣyaṭīkā* in the colophon.[1] From another colophon it appears to have been known as *Bhāṣyasūkti* or *Dravyabhāṣyasūkti*.[2] *Padārthatattvanirṇaya* seems to be still another name of the same work.[3]

The complete commentary of Jagadīśa on Praśastapāda is not known to exist anywhere. All available manuscripts run up to the discussion of *Dravya* category. It is not known for certain if Jagadīśa commented on this part of Praśastapāda alone or the remaining portions of his book have been lost.

On a comparison of the style of this work with that of his other works it seems to be the earliest of the literary productions of Jagadīśa. The style here is undoubtedly inferior to the finished and verbose one we meet with in his *Tattvacintāmaṇidīdhitiprakāśikā*. And this is justifiable only on the assumption that Jagadīśa was yet on the threshhold of his literary carrier when he composed this work. This conclusion seems to be further supported by the fact that, like a humble beginner, he introduces the book with a request to the scholars that they should take what he has got to say here into their consideration before they summarily reject it, while in his *Tarkāmṛta* our author who has full confidence in his scholarship makes bold to qualify it by the adjective 'unparalelled' (*nirupama*).[4] That the *Tarkāmṛta*

1 *Notices of Sanskrit Manuscripts*—R. L. Mitra—vol. VII. No. 2485.

2 *Nyāyakandalī* (ed. Vindhyeśvarīprasāda) Introduction.

3 *Catalogus Catalogorum* vol. I. p. 357

4 cf. Introductory verses of the two books.

was later than the *Sūkti* is almost certain as the deficiencies in the latter are always found to have been made good in the former.[1]

Traces of the indebtedness of Jagadīśa for his sūkti to *Kiraṇāvalī* and *Nyāyakandalī* are palpable. Thus, the method of his predecessors is followed by him and statements made in the latter are quoted here sometimes as authority to support his statements and sometimes for the sake of refutation.[2]

But though it is based on the works of Udayana and Śrīdhara the text of Praśastapāda as used by Jagadīśa appears to have been different from the one used by the former.[3] What is more important is that even in the case of the *Vaiśeṣika sūtras* themselves readings adopted by him are, in some places, different from those usually accepted and to be found in works like Praśastapāda etc.[4]

## Manuscripts and printed texts from which the book is edited

Now, the Sūkti, with the editor's original Sanskrit commentary and Bengali elucidation on it, is edited in the following pages from two manuscripts—one complete and another fragmentary—indicated respectively by क and ङ—both belonging to the Sanskrit Sāhitya Parishat. The text of the sūkti so far as it has been published in the Chowkhamba Series, though highly defective, has also been consulted. It has been indicated by ख. For the text of the *Praśastapādabhāṣya* both the Benares editions of it—one with *Kiraṇāvalī* and the other with *Nyāya-kandalī* have been compared and indicated respectively by ग and घ.

---

1 Sanskrit Introduction, below—p.21. f. n. 3.

2 *Loc. cit.* p. 17. f. n. 3, p. 18. f. n. 1—3.

3 *Loc. cit.* p. 18. f. n. 4.

4 *Loc. cit.* p. 18. f. n. 5, p. 19. f. n. 1.

# विषयसूचिः

## सूक्तिदीपिका

यत्पादनीरजरजःपरिधूसराङ्गः
सर्व्वत्र सिद्धिमधिगन्तुमधीश्वरः स्याम्।
पित्रोस्तयोः पदसरोजरजः प्रशस्य
शीर्षे तथा हृदि निधाय विधिं विदध्याम्।

दुर्गाचरणनिषक्तं हरिपदरक्तं श्रितन्यायम्।
सपदि कृपामयतातं शिवमनुवेलं शिवं वन्दे॥

निर्व्विघ्नेन प्रारिप्सितसूक्तिपरिसमाप्तिकामः श्रीमान् जगदीशो दुर्गमपद-प्रशस्तपादभाष्यतत्त्वेषु स्वप्रकाशमभिवाञ्छन् शिवशक्तिं भगवतीं दुर्गामभिष्टौति नम इत्यादिना।

कणभक्ष्यमुनेरिति पाठे—कणाः शस्यकणाः भक्ष्याः भक्षणीयाः जीविकोपायत्वेन यस्य मुनेस्तस्येति व्युत्पत्त्या कणादस्येत्यर्थः। तदुक्तं न्यायकन्दलीग्रन्थे श्रीधराचार्य्यैः—'तस्य कापोतीं वृत्तिमनुतिष्ठतो रथ्यानिपतितांस्तण्डुलकणानादाय प्रत्यहं कृताहारनिमित्ता संज्ञा' इति। प्रकृतं कर्त्तरि सिद्धम्। पक्षः सिद्धान्तः तस्य रक्षायां परप्रदत्तदोषनिराकरणेनेति शेषः। विन्यस्तवासनाः सकामाः। चिन्तयन्तु स्मरन्तु, न तु केवलमाम्रेड़ितमेव कुर्व्वन्तु। तथाहि एतत्स्मृतिमन्तरेण दुर्गमभाष्यार्थप्रकाशविरहात् असुकरा किल कणादपक्षरक्षेति भावः।

विघ्नविघातायेति—प्रारिप्सितसमाप्तिप्रतिबन्धकीभूतदुरदृष्टविध्वंसायेत्यर्थः। यद्यपि 'समाप्तिकामो मङ्गलमाचरेद्' इति शिष्टाचारानुमितश्रुत्या मङ्गलाचरणस्य समाप्तिरेव फल-मुपगम्यते, न तु विघ्नविघातोऽपि, तथापि मङ्गलाचरणानन्तरमेव समाप्त्यदर्शनात् तज्जन्यादृष्टकल्पनावत् सत्स्वपि मङ्गलाचरणचयेषु कादम्बर्य्यादौ निर्व्विघ्नग्रन्थसमाप्तिविरहतो विघ्नध्वंसस्यापि अनुरूपमङ्गलाचरणप्रयोज्यस्य समाप्तिसाधकत्वं कल्पनीयम्, अन्यथा मङ्गलाचरणजन्यशुभादृष्टसम्बलनस्य तत्रापि स्वीकर्त्तव्यतया समाप्त्यसत्त्वेन समाप्तिं प्रत्यपि तत्कारणताया दुर्ग्रहत्वापत्तेः, व्यभिचारग्रहस्य कारणताग्रहविरोधित्वादिति। मङ्गलाचरणस्य विघ्नध्वंस एव फलं, समाप्तिस्तु बुद्धिप्रतिभादिकारणकलापादिति ब्रुवाणानां नव्यानान्तु यथाश्रुतमेव सम्यक्।

विषयाः पृष्ठेषु



—००—

# भूमिका

**वैशेषिकदर्शनस्य सप्तपदार्थपरत्वम्**—विदितमेवेदं भारतीयदार्शनिकानाम् यथा षट्सु प्रथितास्तिकदर्शनेषु वैशेषिकमेकतमं पदार्थतत्त्वनिर्णयप्रधानं दर्शनमिति। तत्र मुख्यतया प्रतिपादिताः षट् पदार्था द्रव्यगुणकर्म्मसामान्यविशेषसमवायाः, त एव गौणतयाऽभावस्यापि अभ्युपगमेनाभावसप्तमाः। न च 'द्रव्यगुणकर्म्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्म्यवैधर्म्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्' इति सूत्रेण पदार्थषट्कमात्रप्रतिपादनात्, 'न वयं षट्पदार्थवादिनो वैशेषिकादिव'दिति सांख्यसूत्रादिभिरपि कणादतच्छिष्यप्रशिष्यादीनां षट्पदार्थवादित्वस्य विशेषतः समुल्लेखात्, 'धर्म्मं व्याख्यातुकामस्य षट्पदार्थोपवर्णनम्। सागरं गन्तुकामस्य हिमवद्गमनोपमम्'। इति षट्पदार्थवादितया समुल्लिख्यैव वैशेषिकदर्शनकाराणामधिक्षेपोपक्षेपादन्यथा च वैशेषिकदर्शनसिद्धाः षड़ेव पदार्थाः प्रसिध्यन्ति, नाभावसप्तमा इति शङ्कनीयम्, श्रीभगवदुदयनाचार्य्यादिभिरेतच्छङ्कायाः सुसमाधानात् (१)। विस्तरः सूक्तिदीपिकायामनुसन्धेयः

**न्यायवैशेषिकयोर्मतभेदादिकम्**—नव्यनैयायिकैरपि संक्षेपतस्तदेव मतमुपाददानैः प्रवर्त्तितं नव्यन्यायशास्त्रं, यस्य हि परिभाषाप्रद्योतकतया

---

(१) तदुक्तं किरणावल्याम्—'एते च पदार्थाः प्रधानतयोद्दिष्टाः, अभावस्तु स्वरूपवानपि पृथक् नोद्दिष्टः प्रतियोगिनिरूपणाधीननिरूपणत्वात्, न तु तुच्छत्वात, उत्पत्तिविनाशचिन्तायां प्रागभावप्रध्वंसाभावयोः वैधर्म्म्ये च इतरेतराभावात्यन्ताभावयोः तत्र तत्र दर्शयिष्यमाणत्वा'दिति। तथा न्यायकन्दल्याम्—'अभावस्य पृथगनुपदेशः भावपारतन्त्र्यात्, न त्वभावात्' इति।

तथा कणादसूत्रविवृतौ—'अत्र षट्पदार्थकीर्त्तनं भावाभिप्रायेण वस्तुतोऽभावोऽपि पदार्थान्तरतया मुनेरभिप्रेत', अत एव द्वितीयाह्निके कारणाभावात् कार्य्याभाव इति सूत्रस्य, नवमाध्याये 'क्रियागुणव्यपदेशाभावात् इत्यादिसूत्राणाञ्च नासङ्गतिः। अत एव न्यायलीलावत्याम् अभावश्च वक्तव्यो निःश्रेयसोपयोगित्वात् भावप्रपञ्चवत् कारणाभावेन कार्य्याभावस्य सर्वसिद्धत्वादुपयोगित्वसिद्धे रित्यभिहितम्' इति।

सुचिरमधीयते नव्यन्यायविद्यार्थिभिः सप्तपदार्थोपदेशको(१) भाषापरिच्छेदो नाम। न च वैशेषिकमतप्रतिपादक एवायमिति वाच्यं 'एतेषां पाकजत्वन्तु चितो नान्यत्र कुत्रचि'दित्यनेन तत्रैव स्वारसिकतया स्वमतमुपक्षिप्य 'तत्रापि परमाणौ स्यात् पाको वैशेषिके नये' इत्यनेन स्वमतभिन्नतया वैशेषिकमतस्य संसूचनात्। साम्प्रतिकनैयायिकानां पदार्थतत्त्वनिर्णये सप्तपदार्थवाद एवावलम्बो न्यायमताविरोधेन सुतरामस्य प्रतिष्ठानात्। बहुभिरेव टीकाकारादिभिरक्षपादोपक्षिप्तषोडशपदार्थानामत्रैव सप्तसु पदार्थेषु प्रवेशस्य सङ्कीर्त्तनाच्च (२)। सन्ति च ये ये न्यायवैशेषिकदर्शनयोः पदार्थतत्त्वमधिकृत्यावान्तरभेदाः, ते ते परस्परविशेषसाधनाय नितरामलं भवन्ति। तद्यथा न्यायदर्शने चत्वारि प्रमाणानि वैशेषिके दर्शने च प्रमाणद्वयी(३) न्याये समवायः प्रत्यक्षः, वैशेषिके चानुमेयः,(४) न्याये अवयविनि पाकः, वैशेषिके चावयवेषु(५) इत्येवं रीत्या वैषम्यमुपगन्तव्यम्।

समानाञ्च तेषां पदार्थानां सामान्यतो विशेषतश्च भाष्यादिभिरेव सुव्याख्यातत्वात् नात्र तद्विषयावलम्बनः समीचीनः प्रयास इति मन्यमानास्ततो विरमामः। पदार्थानां तत्त्वज्ञानस्य निःश्रेयसोपयोगित्वादिकमपि सविशेषं सूक्तिदीपिकाभाष्यतात्पर्य्यादिभिरेव सुविशदीकृतमास्ते।

---

(१) 'द्रव्यं गुणास्तथा कर्म्म सामान्यं सविशेषकम्। समवायस्तथाऽभावः पदार्थाः सप्त कीर्त्तिताः'। इति भाषापरिच्छेदः।

(२) 'सर्व्वेषामपि पदार्थानां यथायथमुक्तेष्वन्तर्भावात् सप्तैव पदार्था इति सिद्धम्' इति अन्नंभट्टकृततर्कसंग्रहः।

(३) 'प्रत्यक्षमेकं चार्व्वाकाः कणादसुगतौ पुनः। अनुमानञ्च तच्चाथ सांख्याः शब्दञ्च ते अपि। न्यायैकदेशिनोऽप्येवमुपमानञ्च केचन। अर्थापत्त्या सहैतानि चत्वार्य्याहुः प्रभाकराः। अभावषष्ठान्येतानि भाट्टा वेदान्तिनस्तथा। सम्भवैतिह्ययुक्तानि तानि पौराणिका जगुः।' इति सर्व्वमतसंग्रहः।

(४) 'प्रत्यक्षः समवाय इति नैयायिकास्तदप्यनुपपन्नं समवायोऽतीन्द्रियः आत्मान्यत्वे सति असमवेतभावत्वात् मनोवत् कालादिवद् वा' इति वैशेषिकसूत्रोपस्कारः।

(५) 'एतेषां पाकजत्वन्तु चिता'वित्यादिः भाषापरिच्छेदः।

**वैशेषिकदर्शनसंज्ञाभेदा:**—तदिदं वैशेषिकदर्शनं औलूक्यदर्शनमिति(१) काणाददर्शन(२)मिति )वैशेषिकदर्शन(३)मिति च बहुविधाः संज्ञा बोधकतया अङ्गीकरोति। तत्रास्य संज्ञाभेदवीजमिदमेव विवियते यथा,—औलूक्यः उलूकर्षिगोत्रसम्भूतः तत्कृतं दर्शनम् औलूक्यदर्शनमिति। एतेन वैशेषिकदर्शन-मतप्रवर्त्तकतया प्रथितस्य कणादापरनाम्नः काश्यपस्य औलूक्य इत्यपि गोत्रकृतं नामान्तरमित्यायाति। अत एव कुत्रचित् औलूक्य इत्यत्र औलूक इत्यपि निर्देशो दृश्यते।

**वैशेषिकदर्शनमिति संज्ञावीजम्**—वैशेषिकदर्शनमिति संज्ञाया नाना-विधं वीजमनुसन्धीयते। तत्र प्रथमं तावत् विशेषेण अन्त्यलक्षणेन(४) संसृष्टं दर्शनं वैशेषिकदर्शनम्। तथाहि अन्यत्र दर्शने तथाभूतस्य विशेषस्य अनुपदेशात्

---

(१) सर्व्वदर्शनसंग्रहे एतत्सप्तपदार्थवादविचारप्रकरणे तन्मतस्य औलूक्यदर्शनतया माधवाचार्य्येण कृतः परिग्रहः।

आवश्यकाभिधे जैनग्रन्थे 'षड्लू'वंशोद्भवेन रोहगुप्तेन (रोहगुप्तेन) महावीरसमयात् चतुश्चत्वारिंशदधिकपञ्चशतसंवत्सरेभ्यः पर प्रादुर्भूतेन वैशेषिकदर्शनं प्रवर्त्तितमिति यतो दर्शनस्य नामान्तरं चलूदा इति ( इदं नाम औलूक्य इत्यस्य अपभ्रंशः स्यात् ) इति क्लिथ्-साहवमहोदयानामाशयः। 'इह किल पूर्व्वमजिह्मब्रह्माभ्यासदूरीकृतप्रमादाय मुनये कणादाय स्वयमोश्वर उलूकरूपधारी प्रत्यक्षीभूय द्रव्यगुणकर्म्मसामान्यविशेषसमवायलक्षणं पदार्थषट्कमुपदिदेश। तदनु स महर्षिर्लोकानुकम्पया षट्पदार्थरहस्यप्रपञ्चनपराणि सूत्राणि रचयाञ्चकार। इति राजशेखरकृतन्यायकन्दलीटीका औलूक्येति नाम्नो वीजा-न्तरं सूचयति। एतद्विशेषविवरणानि वाराणसीमुद्रापितन्यायकन्दलीभूमिकायामालोच्यानि।

(२) कणादस्य इदमिति काणादं दर्शनमिति स्पष्टम्। कणादशब्दार्थः सूक्तिदीपि-कायामेव विवृतोऽस्माभिः।

(३) उक्तं प्रशस्तपादेन—'योगाचारविभूत्या यस्तोषयित्वा महेश्वरम्। चक्रे वैशेषिकं शास्त्रं तस्मै कणभुजे नमः।' इति प्रशस्तपादभाष्यान्ते।

'कणादेन तु सम्प्रोक्तं शास्त्रं वैशेषिकं महत्। गौतमेन तथा न्यायं सांख्यन्तु कपिलेन वै।' इति पद्मपुराणम्।

(४) 'अन्यत्र अन्त्येभ्यो विशेषेभ्य' इति वैशेषिकदर्शनसूत्रम्।

अत्र च विशेषेण स्वतन्त्रतया तदुपदेशादेतद्दर्शनस्य दर्शनान्तरव्यावृत्तेः स्फुटतया लाभेन दर्शनान्तरव्यावर्त्तिकेयमस्य संज्ञेति।

द्वितीयं तावत् एकदेशिनां मते अत्यन्तविशेषगुणोच्छेद एव मोक्षः, (१) न तु दुःखात्यन्तोच्छेदः, अत एव मुक्तेः सर्वदर्शनप्रतिपाद्यतया तत्रैव विशेष-गुणमादाय दर्शनान्तरवैलक्षण्यस्य उपपादितत्वात् विशेष एव वैशेषिक इति स्वार्थे णिकप्रत्ययेन तत्सम्बन्धितया दर्शनसंज्ञा, विशेषेण विशेषगुणेन संसृष्ट-मिति वार्थस्तत्र कर्त्तव्यः।

तृतीयं तावत् विगतः शेषः यस्य तत् विशेषं निरवशेषं तदेव वैशेषिकम्। तथाहि षोड़शपदार्थवादिप्रभृतिभिः पदार्थानां षोड़शसंख्यादिकमुपगम्य ये ये पदार्था उपपादिताः सप्तपदार्थमात्रवादिनां वैशेषिकाणामपि प्रस्थानेन ते ते निरवशेषाः सिद्धा, अत एव पदार्थतत्त्वानि निःशेषमधिजिगमिषूणाम् आदितः सप्तपदार्थनामश्रवणमात्रेणैव नोपयुक्तो विरागः, एतेनैव सर्वपदार्थानां निःशेष-मुपदेशादिति नाम्नापि स्वदर्शने तत्त्वजिज्ञासुप्रवृत्तिरनुकूलिता।

चतुर्थं तावत् विशेषणं विशेषः पदार्थानां लक्षणपरीक्षादिभिः प्रति-पादनम्, स एव वैशेषिकम्, स्वार्थिका अपि शब्दाः कदाचित् स्वलिङ्गवचनानि अतिवर्त्तन्त इति नयेन स्वार्थिकणिकप्रत्ययान्तस्यापि लिङ्गपरित्यागो न विरुध्यते। एतेन सांख्यवेदान्तग्रन्थादिषु साक्षात् मुक्त्यनुकूलपदार्थानामेव सविशेषविचारेण सृष्टितत्त्वाद्यालोचनेन च पदार्थतत्त्वेषु तथा सम्यग्दर्शनं नो सम्भवतीति तत्प्रयोजनकतया न्यायवैशेषिकादीनामत्यन्तमुपयोगित्वेन तत्प्रकारेरेव सिद्धान्तितत्वात् तदर्थिकेयं संज्ञा। तत्रापि न्यायदर्शनतत्त्वस्य लाघवमभिप्रेत्य केवलमेतेनैव विचारितेन पदार्थतत्त्वे सम्यग्दर्शननिष्पत्तिरिति प्रथयितुं नाम्ना तत्प्रतिपादनेन मुमुक्षुप्रभृतीनां साम्मुख्यमुपपादितं भवतीति ध्येयम्।

---

(१) 'अशेषविशेषगुणध्वंसावधिकदुःखप्रागभावो वा मुक्तिरिति तत्त्वज्ञानान्निःश्रेयस'-मित्यत्रनवीपस्कारे शङ्करमिश्राः। 'एके तावद्वर्णयन्ति समस्तविशेषगुणोच्छेदे संहारा-वस्थायामाकाशवदात्मनोऽत्यन्तावस्थानं मोक्ष' इति भासर्वज्ञकृतन्यायसारसन्दर्भस्य जय-सिंहसूरिकृतन्यायतात्पर्य्यदीपिकायाम् 'एके इति औलूक्या.' इति। एकदेशिनामित्युक्तिश्च बहुत्रैव दुःखात्यन्तोच्छेदस्य वैशेषिकमतसिद्धमुक्तित्वस्य आचार्यादिभिरुपदेशात्।

पञ्चमं तावत् विशेषो भेदः विशेषो विशेषगुणाश्च ताभ्यां संसृष्टं दर्शनं वैशेषिकम्। तथाहि वेदान्तदर्शने आत्मनो भेदो नाभ्युपेयते विशेषगुणाश्च। अत्र दर्शने आत्मनां भेदः, तद्वृत्तिविशेषगुणाश्चाभ्युपेयन्ते। कापिलैः आत्मभेदमङ्गीकुर्वाणैरपि नात्मनो विशेषगुणवत्त्वम्। अत एव अनया संज्ञया स्वदर्शनस्य आत्मभेदपरत्वं आत्मसगुणत्वपरत्वञ्चेति द्वयं प्रतिपादयद्भिः कणादमहर्षिभिः सांख्यवेदान्तादिभिरस्य गतार्थत्वं नास्तीति प्रतिपाद्यते। बीजान्तराणि पुनरनुसन्धेयानि।

**वैशेषिकदर्शनाध्यायादिकथा**—अस्य दर्शनस्य दश अध्यायाः, प्रत्यध्यायमाह्निकद्वयं, तदेवं सम्भूय विंशतिराह्निकानि सम्पद्यन्ते। अध्यायविषयास्तु स्वयमालोचनेन वा वङ्गीय-एसियाटिकसोसाइटीसभाप्रकाशित-निर्घण्टपत्रसमोचनाद् वा सुबोधा इति ग्रन्थविस्तरभिया नात्र तदुल्लेखः।

**वैशेषिकदर्शनव्याख्यानकथा**—एतद्दर्शनस्य प्रत्येकं सूत्रमधिकृत्य पृथक्तया व्याख्यानद्वयं प्राचीनम् एकञ्च नवीनमनुलक्ष्यते। तत्र एकं शङ्करमिश्रकृतवैशेषिकोपस्काररूपम्, अन्यत् भारद्वाजवृत्त्याख्यम् (१)। एतद्द्वयमेव प्राचीनम्। नवीनञ्च बहुलतन्त्रस्वतन्त्राणां वङ्गालङ्कारभूत-महामहोपाध्याय-चन्द्रकान्ततर्कालङ्कार-महाभागानां कृतिः वैशेषिकसूत्रभाष्यं नाम।

---

(१) भारद्वाजवृत्तिर्नाम वैशेषिकसूत्रव्याख्यानं यद्यपि अद्यत्वे नोपलभ्यतेऽस्माभिः, तथापि वाराणसीमुद्रितन्यायकन्दलीसहितप्रशस्तपादभाष्यटिप्पन्या विद्वद्वरविन्ध्येश्वरीप्रसादद्विवेदमहाभागैः स्वयं 'वाराणस्यानकस्य सन्यासिनो निकटे तालपत्रेषु मैथिलाक्षरैर्लिखितं जीर्णत्वात् समन्तािच्छन्नं भारद्वाजवृत्तिपुस्तकं वर्त्तते, तत्र पत्राङ्कानामपि छिन्नत्वात् किं केन पत्रेण संयोज्यमित्यपि कर्त्तुमशक्यम्। प्रारम्भपत्रस्य प्रथमपृष्ठे वैशेषिकसूत्रवृत्तिभारद्वाजीया इति लेखदर्शनात्, यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म्म इति सूत्रव्याख्याने शङ्करमिश्रैर्निरूपितस्य वृत्तिकृतस्त्वित्यादिलेखस्य दर्शनात् सेवेयं वृत्तिरिति निर्णीतम्' इति लेखोपन्यासस्य कृतत्वात् तथोक्तम्।

'श्रीगङ्गाधरकविरत्नकविराजकृत-भारद्वाजवृत्तिभाष्यपुस्तके तु सूत्रेषु पाठभेदादयो वर्त्तन्त एव किन्तु अध्यायाह्निकक्रमवैषम्यमपि वर्त्तत इति तत्र मृग्य'मित्यपि तदुक्तिस्तत्रैवोपलभ्यते।

अस्ति चापरं रावणप्रणीतं भाष्यमिति(१), तदपि प्रतिसूत्रमपरभाष्यरीत्या निबद्धमिति कल्प्यते। तदेवं सम्भूय चत्वारि तथा व्याख्यानानि सम्भाव्यन्ते।

सूत्रोक्तविषयान् साकल्येन मनसि कृत्वा प्रकरणग्रन्थरूपेण तदीयव्याख्यानं प्रशस्तपादकृतं भाष्यं शङ्करमिश्रकृतं कणादरहस्यं वल्लभाचार्यकृता न्याय-लीलावती चेति। न च कणादरहस्ये शङ्करमिश्रेण स्वयमेव 'प्रशस्तपादा-चार्यभाष्यव्याख्याछलेन कणादरहस्यं व्याख्यास्याम' इत्युक्तत्वात् प्रशस्तपाद-भाष्यव्याख्यैवेयमिति वक्तुमुचितमिति वाच्यं छलशब्दप्रयोगेण तस्य तथात्वस्य पारमार्थिकतायाः स्वयमेव अपाकृतत्वात् भाष्यप्रतीकाद्यनासादनेन मुख्यतया तस्य भाष्यव्याख्यानत्वस्य उपपादयितुमशक्यत्वात् व्याख्येयप्रतीकाद्यनवलम्बनेन तद्व्याख्यानत्वस्य स्वीकारे एकशेषस्य दुष्करत्वाच्चेति। न्यायलीलावत्यां सृष्टिसंहारविधिनिरूपणारम्भे 'अत्र भाष्ये संहारविधिरुक्तः, स नास्ति प्रमाणाभावादित्येके' इत्यादि सन्दर्भदर्शनात् भाष्यं मनसि कृत्वैव वल्लभा-चार्याः स्वग्रन्थं न्यबध्नन्, न तु सूत्राणि मनसि कृत्वेति प्रतीयते, अतः न्याय-लीलावती भाष्यव्याख्यानमिति केचिदाहुः; तत्र प्रशस्तपादभाष्यस्य वैशेषिक-दर्शनव्याख्यानेषु सविशेषप्रामाणिकतया तन्मतपरिपोषणाय एव तदुक्तिरन्यत्र दर्शनेष्विव प्रकृतदर्शनेष्विव वा सुसङ्गच्छते।

**प्रशस्तपादभाष्यस्य विशेषतः प्रामाण्यम्**—तदेवं कणादकृतवैशेषिक-सूत्राणां बहूनि व्याख्यानानि तत्तद्विशेषविवरणाय समुपलभ्यन्त इति स्थिते-ऽपि तेषु व्याख्यानेषु प्रशस्तपादभाष्यस्य विशेषतः प्रामाण्यं प्रशस्तपादस्य ऋषित्वात्(२) तदुक्तेरदोषप्रयुक्तत्वात् प्राचीनत्वमपि शक्यनिश्चयं बौधायन-

---

(१) अत्रापि तैरेव पूर्वोक्तमहाभागैरुपचिता टिप्पनी पर्यालोच्या।

किथ्साहवमहोदयैरपि 'प्रशस्तपादभाष्यमिव रावणभाष्यमपरं भाष्यं वैशेषिकदर्शनसूत्राणा'-मिति वदन्ति।

(२) 'प्रवरैर्ये समाख्याता ऋषयस्त इति श्रुतिः'। इति। प्रशस्तस्य च 'औशनसा दिश्याः प्रशस्ताः सुरूपाचाः महोदराः विकङ्कताः सुवृक्षा निहता इत्येते औशनसाः तेषां त्र्यार्षेयः प्रवरो भवति आङ्गिरसगौतमौशनस इति इत्यादि प्रवराध्याये बौधायनेन निर्देशात् ऋषित्वं सङ्गतम्। 'प्रशस्तस्याभवन् पञ्च पुत्राः सर्वे तपोधनाः' इति शिवरहस्यम्।

सूत्रशिवरहस्यग्रन्थादौ प्रशस्तनामोल्लेखात् प्रायेण सर्व्वैर्व्याख्यातृभिः तद्व्याख्यास्मरणेन (१) स्वकृतौ प्रवर्त्तनस्य बतुत्र सूचितत्वाच्च।

**प्रस्तुतभाष्यस्य प्रशस्तपादभाष्यत्वयुक्तिः**—अथ इदमेव भाष्यं प्रशस्तपादाचार्य्यकृतमित्यत्र किं मानम्? यद्वि प्रशस्तपादभाष्यव्याख्याच्छलेन कणादरहस्यं व्याख्यास्याम इति शङ्करमिश्रकृतग्रन्थप्रतीकं दृश्यते, तदन्यविधानुपूर्व्वीकग्रन्थस्य प्रशस्तपादभाष्यत्वेऽपि नासङ्गतं भवतीति चेन्न बहुषु प्राचीनहस्तलिखितपुस्तकेषु एवमानुपूर्व्वीकस्यैव ग्रन्थरत्नस्य पुष्पिकाविलासेन प्रशस्तपादभाष्यत्वकीर्त्तनस्य दृष्टचरत्वात् प्रामाणिकटीकाकारैरुदयनश्रीधराचार्य्यजगदीशादिभिरस्यैव प्रशस्तपादकृतत्वनिश्चयेन तदीयटीकानिर्माणे टीकाव्याख्यानादिनिर्माणे च स्वप्रतिभाया नियोजितत्वात् (२)

---

(१) 'प्रशस्तपादाचार्य्यभाष्यव्याख्याच्छलेन कणादरहस्यं व्याख्यास्याम' इति कणादरहस्ये शङ्करमिश्राः। 'अत्र भाष्ये संहारविधिरुक्त' इति न्यायलीलावत्यां वल्लभाचार्य्याः। 'प्रशस्ताचार्य्यास्तु सिद्धदर्शनं न ज्ञानान्तरमित्याहुरिति' उपस्कारे शङ्करमिश्राः।

(२) भगवता श्रीमदुदयनाचार्य्येण प्रशस्तपादभाष्योपरि किरणावलीटीका निर्म्मिता, श्रीधराचार्य्यैः न्यायकन्दलीटीका निर्म्मिता। उक्तञ्च श्रीधराचार्य्यैः स्वकृतन्यायकन्दलीग्रन्थान्ते क्वचिदुपलभ्यते। कणादकृतमूलदृब्धा प्रशस्तभाष्यद्रुमावनद्धा च। श्रीधरहृदयोपवने विलसन्ती न्यायकन्दली रम्या॥' इति। महामहोपाध्याय-जगदीशतर्कालङ्कारभट्टाचार्य्यैः प्रशस्तपादद्रव्यभाष्यग्रन्थोपरि द्रव्यभाष्यसूक्तिरिति सूक्तिरिति द्रव्यभाष्यटीकेति वा नाम्ना टीका कृता। व्योमशिवाचार्य्यैः प्रशस्तपादभाष्ये व्योमवतीनाम टीका कृता। तत्रैव च महामहोपाध्याय-पद्मनाभमिश्रेण सेतुनाम्नी टीका विहिता, यत्समन्वितं प्रशस्तभाष्यं चौखाम्बासंस्कृतग्रन्थमालायां मुद्राप्यमाणमुपलभ्यते। अनुमानतः खृष्टीय-षट्शतवत्सरेभ्यः पूर्व्वं चन्द्रेण दशपदार्थशास्त्रग्रन्थः प्रशस्तपादभाष्यग्रन्थावलम्बनेन प्रणीतः। तस्य केवलमद्यत्वे चैनिकभाषानुवादः समुपलभ्यते। इति। किरणावलीग्रन्थोपरि वर्द्धमानोपाध्यायेन किरणावलीप्रकाशाख्यं, तदुपरि च भगीरथठक्कुरेण द्रव्यप्रकाशिकाख्यं, अपरञ्च रघुनाथभट्टाचार्य्यकृतं गुणप्रकाशविवृतिनामकं, विवृतेरपि व्याख्यानं मथुरानाथतर्कवागीशेन गुणप्रकाशविवृतिरहस्यनामकं, गुणप्रकाशविवृतिभावप्रकाशिकाख्यमपरं रुद्रभट्टाचार्य्यकृतं, तृतीयं रामकृष्णकृतं, चतुर्थं जयरामभट्टाचार्य्यकृतं, अन्यच्च गदाधरेण गुणकिरणावलीदीधितिरहस्यम्, किरणावलीग्रन्थोपरि बलभद्रात्मजपद्मनाभकृतं किरणावलीभास्करनामकं, प्रशस्तपादभाष्य

चित्सुखाचार्य्यादिभिरपि चित्सुखीग्रन्थादौ 'गुणादीनां पञ्चानामपि निर्गुणत्व-निष्क्रियत्वे इति प्रशस्तपादभाष्यदर्शना'दित्यादिग्रन्थेन एतद्ग्रन्थीयप्रतीकस्यैव प्रशस्तपादभाष्यांशत्वस्य प्रतिपादनाच्च। तदिदमेव भाष्यं प्रशस्तपादकृतमित्य-विवादम्।

**प्रशस्तपादस्य नामविचारः**—अथेदानीं प्रशस्तपादस्य नामसम्बन्धी विचारः प्रवर्त्तते —कुत्रचिद्दृश्यते भाष्यस्यास्य प्रशस्तकरकृतत्वमिति। अपरत्र कुत्रापि प्रशस्तपादकृतत्वमिति। अन्यत्र च प्रशस्तदेवाचार्य्यकृतत्वमिति। परत्र च केवलप्रशस्तशब्दप्रयोगेण प्रशस्तकृतत्वमिति। कुत्रचिच्चेतरत्र प्रशस्तकरपादाचार्य्यकृतत्वमित्येतावतो मतभेदानाश्रित्य(१) संशयः समुद्भवति,—किमयं प्रशस्तो वा प्रशस्तकरो वा प्रशस्तपादो वा प्रशस्तकरपादो वा प्रशस्तदेवाचार्य्यो वेति। प्रशस्तचरणादिसंज्ञाभागित्वमपि क्वचिदेषां दृष्टचरमास्ते (२)। तदत्र विनिगमनानुसरणार्थं विचारः प्रवर्त्तनीयो भवति। स चेत्थं यथा बोधायनसूत्रे शिवरहस्ये च प्रशस्तपादस्य प्रशस्तेति नाममात्रोल्लेखात् प्रशस्तेत्येव तन्नाम। करपादचरणदेवादिशब्दास्तु पितृपाद-

---

व्याख्या-न्यायलीलावतीग्रन्थोपरि रघुनाथभट्टाचार्य्येण तार्किकशिरोमणिना न्यायलीलावती-दीधितिपुस्तकं रचितमुपलभ्यते। इत्यश्च सर्वैरविवादमस्य प्रशस्तपादभाष्यत्वमङ्गीकृत्य तत्तट्टीकाविधौ प्रयत्न. समाहित इत्यस्यैव तयात्वे को वा संशयः।

(१) वाराणसीमुद्रितकिरणावलीपुस्तके 'प्रशस्तपादभाष्ये द्रव्यपदार्थ' इति ग्रन्थस्थले टिप्पण्यां 'प्रशस्तकरीयभाष्ये' इति पाठान्तरमुपन्यस्तम्। अपरञ्च पाठान्तरं तत्रैव 'श्रीप्रशस्त-देवाचार्य्यविरचिते वैशेषिकभाष्ये' इति। मूलञ्च 'प्रशस्तपादभाष्ये' इति। तदेतत्पाठत्रय-समाहारेण त्रिविधं नाम सम्प्राप्तम्। महादेवभट्टकृतमुक्तावलीव्याख्याने 'आकरे प्रशस्त-पादभाष्यादौ' इत्युक्तत्वात् चित्सुखाचार्य्यादिभिरपि तथैव निर्देशात् प्रशस्तपादेति नाम स्यात् 'प्रशस्तस्याभवन् पुत्रा' इत्यादि शिवरहस्यवचनात् 'प्रशस्तभाष्यदुग्धाब्धिजन्मा' इति न्याय-कन्दलीवचनात् 'प्रशस्ताचार्य्यास्तु सिद्धदर्शनं न ज्ञानान्तर'मित्युपस्कारवचनाच्च प्रशस्तेत्येतन्मात्र-स्यापि नामत्वमायाति।

(२) नैयायिकोऽक्षपादः प्रशस्तपादः प्रशस्तचरणोऽक्षचरण इति महर्षेर्गौतमस्यैव नामभेदाः इति किंवदन्ती बहूनाम् चर्चाङ्किता विमृश्य श्रीप्रसादैः।

উত্তর এই যে শরীরনিষ্পাদ্য কার্য্যসমূহ শরীরশূন্য ঈশ্বরের নির্ম্মাণ করা অসম্ভব, এই জন্যই শরীরযুক্ত একজন কর্ত্তা স্বীকার করিতে হইয়াছে।

---

प्रशस्तपादभाष्यम्

आकाशकालदिशामेकैकत्वादपरजात्यभावे सति पारिभाषिक्यस्तिस्रः संज्ञा भवन्ति आकाशं कालो दिगिति। तत्र आकाशगुणाः शब्द-संख्या-परिमाण-पृथक्त्व-संयोग-विभागाः। तत्र (१) शब्दः प्रत्यक्षत्वे सति अकारणगुणपूर्वकत्वादयावद्द्रव्यभावित्वादाश्रयादन्यत्रोपलब्धेश्च न स्पर्शवद्विशेषगुणः। बाह्येन्द्रियप्रत्यक्षत्वादात्मान्तरग्राह्यत्वादात्मन्यसमवायादहङ्कारेण विभक्तग्रहणाच्च नात्मगुणः। श्रोत्रग्राह्यत्वाद्विशेषगुणभावाच्च न दिक्कालमनसाम्। (२) पारिशेष्याद् गुणो भूत्वा आकाशस्याधिगमे लिङ्गम्। शब्दलिङ्गत्वाविशेषा(३)देकत्वं सिद्धम्। तदनुविधानात्(४) पृथक्त्वम्। विभववचनात् परममहत्परिमाणम्। शब्द-

---

(१) क्वचित् तत्रेति नास्ति।

(२) परिशेषादिति पाठान्तरम्।

(३) लिङ्गाविशेषत्वादिति पाठान्तरम्। क्वचित् शब्दलिङ्गाविशेषादित्यपि।

(४) विधानादेकेति विधानादेवेति च पाठान्तरे।

कारणत्ववचनात्(५) संयोगविभागाविति। अतो गुण-वत्त्वा(६)दनाश्रितत्वाच्च द्रव्यम्। समानासमान-जातीयकारणाभावाच्च नित्यम्। सर्व्वप्राणिनाञ्च शब्दो-पलब्धौ (७) निमित्तं श्रोत्रभावेन। श्रोत्रं पुनः श्रवण-विवरसंज्ञको नभोदेशः (८) शब्दनिमित्तोपभोग-प्रापकधर्म्माधर्म्मोपनिबद्धः। तस्य च नित्यत्वे सति उपनिबन्धकवैकल्याद् वाधिर्य्यमिति।

[ परिशेषाल्लिङ्गमाकाशस्य—२अ-१आ सू२७। तत्त्वभावेन—२अ-१आ-२९सू। शब्दलिङ्गाविशेषाद्विशेषलिङ्गाभावाच्च—२अ-१आ-३सू। तदनुविधा-नादेकपृथक्त्वञ्चेति—२अ-१आ-३१सू। विभवान्महानाकाशस्तथा चात्मा—७अ-१आ-२२सू। कारणगुणपूर्व्वकः कार्य्यगुणो दृष्टः—२अ-१आ-२४सू। कार्य्यान्तराप्रादुर्भावाच्च शब्दः स्पर्शवतामगुणः—२आ-१आ-२६सू। परत्र सम-वायात् प्रत्यक्षत्वाच्च नात्मगुणो न मनोगुणः—२अ-१आ-२७सू। संयोगा-द्विभागाच्च शब्दाच्च शब्दनिष्पत्तिः – २अ-२आ०-३१सू। द्रव्यत्वनित्यत्वे वायुना व्याख्याते—२अ १आ २८सू। श्रोत्रग्रहणो योऽर्थः स शब्दः—२अ-२आ २१सू। इत्येतान्यालम्बनसूत्राणि ]

---

## जगदीशसूक्तिः

गर्गरोगर्त्तादिभेदेन आकाशस्य दण्डलवमुहूर्त्तादिभेदेन कालस्य पूर्वपश्चिमादिभेदेन दिशश्च नानात्वात् आकाशादिजातिमत्त्वेन पृथि-

---

(५) कारणवचनादिति पाठान्तरम्।

(६) गुणवचनवत्त्वादिति पाठान्तरम्।

(७) शब्दोपलम्भकेति पाठान्तरम्। कुत्रचित् शब्दोपलब्धिनिमित्तमिति च दृश्यते।

(८) नभःप्रदेश इति क्वचित् पाठः।

व्यादिरूपत्वेव आकाशादिसंज्ञापि द्रव्यत्वावान्तरजातिनिमित्तिकैवेति मतं निरस्यन्नाह आकाशेत्यादि। एकैकत्वं प्रत्येकनिष्ठभेदप्रतियोगित्वं ततोऽपरजातिर्द्रव्यत्वावान्तरजातिरभाववत्त्वे सतीत्यर्थः। तथाच आकाशं न द्रव्यत्वव्याप्यजातिमत् आकाशनिष्ठभेदाप्रतियोगित्वात् यन्नैवं तन्नैवं यथा घट इत्याद्यनुमानात् द्रव्यत्वावान्तरजातिनिरासात् न तन्निमित्तिका आकाशादिसंज्ञा। न च हेतोः स्वरूपासिद्धिः अग्रे प्रतिकर्त्तव्यत्वादिति भावः। पारिभाषिक्य इति—यद्यपि आधुनिक-सङ्केतशालिन्येव संज्ञा पारिभाषिकी, प्रकृते च शब्दवत्त्वाद्युपाधिप्रवृत्ति-निमित्तकत्वादौपाधिक्येव संज्ञा वक्तुमुचिता, तथापि उभयावृत्ति-धर्मावच्छिन्नसङ्केतवत्त्वमेव पारिभाषिकसंज्ञात्वमित्यभिप्रायेणेदम् अनु-गतोपाध्यवच्छिन्नसंज्ञाया एव औपाधिकत्वोपगमात्।

यत्तु निरवच्छिन्नसङ्केतशालित्वमेव पारिभाषिकत्वम् आकाशपदा-द्धर्मान्तरानवच्छिन्नस्यैव गगनस्योपस्थितेः, अन्यथा आकाशं शब्दवदि-त्यादेः पौनरुक्त्यापत्तेः। न चैवं आकाशत्वमित्यादिप्रयोगो न स्यात् प्रकृत्यर्थतावच्छेदकधर्मस्यैव त्वतलाद्यर्थत्वादिति वाच्यं व्यावर्त्तक-धर्मस्यैव त्वतलादिना भावप्रत्ययेनाभिधानादित्याचार्य्यमतं, तन्न सुचारु आकाशादिपदात् स्वरूपतो गगनादेर्भाने अनुभवविरोधात् कारणबाधाच्च।

न च शब्दवत्त्वाद्युपलक्षित एव धर्म्मिणि आकाशादिपदस्य शक्ति-ग्रहात् तादृरूप्येणान्वयबोधो न तु तदपि शक्यतावच्छेदकमिति वाच्यं घटत्वादेरप्युक्तरीत्या शक्यतावच्छेदकत्वहान्यापत्तेः। सह प्रयोगस्य [पिकः कोकिल इत्यादिवत्] आकाशपदवाच्यः।शब्दवानित्यर्थकत्वेना-प्युपपत्तेरिति संक्षेपः।

तत्र आकाशादित्रिकमध्ये। अत्र शब्दः स्वत एव, संख्यादिस्तु विशेषणान्तरावच्छिन्न एव आकाशस्य वैधर्म्यमित्यग्रे प्रतिपादयिष्यते।

अथ आकाशे धर्म्मिणि प्रत्यक्षं न मानम् तदसत्त्वात्, आरक्त-माकाशं धवलमाकाशमित्यादिचाक्षुषेण प्रभामण्डलस्यावगाहनात्, अन्यथा रूपस्यापि तत्रोपेयत्वे षड्‌गुणत्वव्याघातापत्तेः। किन्तु शब्दो द्रव्याश्रितो गुणत्वादित्यनुमानमेव तत्र मानमुपेयम्। तच्च पृथिव्यादिद्रव्यवृत्तित्वेनाप्युपपन्नं नातिरिक्तसाधकमतः पृथिव्यादिगुणत्वे बाधकमाह शब्द इत्यादिना। शब्दो न स्पर्शवद्विशेषाणां पृथि-व्यादिचतुर्णां गुण इति साध्यार्थः।

प्रत्यक्षत्वे सति अकारणगुणपूर्वकत्वादिति—परत्वापरत्वयोर्व्यभि-चारवारणाय सत्यन्तं प्रतिनियतेन्द्रियग्राह्यत्वे सतीत्यर्थकम्। तन्मात्रञ्च रूपरसादौ व्यभिचारि, अतो विशेष्यदलम्, स्वाश्रयसमवायिकारण-वृत्ति-सजातीयगुणपूर्वकजातीयान्यत्वादिति तदर्थः।

हेत्वन्तरमाह अयावदिति—स्वाश्रयनिष्ठध्वंसाप्रतियोगिवृत्तिगुण-त्वावान्तरजातिशून्यत्वादिति तदर्थः। हेत्वन्तरमाह आश्रयादिति—स्वाश्रयाविषयकसाक्षात्कारविषयत्वात् स्वाश्रयविषयकसाक्षात्कारविष-यान्यगुणत्वादिति वार्थः।

अथ शब्दो यदि न पृथिव्यादिगुणः कथं तर्हि वीणायां ध्वनि-रित्याकारको व्यवहारः? सत्यं शरीरे सुखमित्यादाविव वीणादेरव-च्छेदकतामात्रेण तथा प्रत्ययात्। उत्तानास्तु कथितहेतूनामप्रयोजक-त्वाद् वीणादिगुण एव शब्दः, शब्दविशेषं प्रति वीणात्वादिना हेतुत्वस्य आवश्यकत्वे समवायिकारणतायामेव तत्पर्य्यवसानस्य लाघवेनौचि-त्यात्। न च वीणागुणस्य कर्णासन्निकृष्टत्वेन श्रावणप्रत्यक्षानुपपत्तिः वीणावच्छेद्यशब्दव्यक्तेरपि तथात्वेन तन्मतेऽप्येतद्दोषस्य तुल्यत्वात्, वीचीतरङ्गन्यायेन वीणानवच्छेद्यशब्दस्यैव कर्णावच्छेद्यतायाः सिद्धान्त-सिद्धत्वात्, वीणावच्छेद्यशब्दस्यैव तत्तत्कर्णपर्य्यन्तव्यापित्वोपगमे तु वीणासमवेतशब्दस्यैव तत्तत्कर्णावच्छेद्यत्वस्वीकारस्यापि अदुष्टत्व-

सम्भवात्, तत्तत्कर्णावच्छिन्नशब्दस्य ग्रहं प्रति तत्तत्कर्णत्वेन हेतुत्व-कल्पनयैव अतिप्रसङ्गभङ्गे शब्दप्रत्यक्षं प्रति श्रवणसमवायस्य हेतुत्वे मानाभावादिति प्राहुः।

अथ मास्तु पृथिव्यादिचतुर्णां गुणः शब्दः, किन्तु आत्मगुण एव भविष्यति, तथापरातिरिक्तमाकाशं नायातमेव इत्यत आह वाह्येति—मानसान्यसाक्षात्कारविषयत्वादित्यर्थः। नात्मगुण इत्यग्रेतनेनान्वयः। शब्दो न बुद्धिमद्गुण इति तदर्थः। तेन आत्मत्वजातिशून्येश्वरीय-गुणत्ववादिनां न सिद्धसाधनस्यावकाशः।

हेत्वन्तरमाह आत्मान्तरेति—आत्मानमन्तराकृत्य ग्राह्यत्वात् आत्माविषयकप्रत्यक्षविषयत्वादिति यावत्। आत्मद्वयग्राह्यत्वादित्यर्थस्तु न युक्तः शब्दमात्रस्यैव पुरुषद्वयावच्छेद्यत्वेन स्वरूपासिद्धत्वादिति ध्येयम्।

आत्मन्यसमवायात् आत्मसमवेतान्यत्वात्। आत्मगुणान्यत्वस्यैव साध्यत्वान्न साध्याविशेषः। अहङ्कारिणैवेति—आत्मधर्म्मिकस्वाश्रयान्यत्व-प्रकारकप्रमाविषयत्वादित्यर्थः, अहं न शब्दवानिति प्रतीतेः प्रमात्वस्य सर्व्वसिद्धत्वादिति भावः।

मास्तामात्मगुणः शब्दः, तथापि दिगादिगुण एव स्यादत आह श्रोत्रेति। न दिक्कालमनसां प्रत्येकस्य गुणः श्रोत्रग्राह्यत्वादिति गुण-शब्दस्यानुषङ्गेण प्रयोगार्थः। श्रोत्रपदं ग्रहणस्य लौकिकत्वलाभार्थम्। विशेषगुणत्वाच्च,चक्षुर्ग्राह्यगुणत्वव्याप्यजातिशून्यगुणत्वादित्यर्थः। पारि-शेष्यात् पृथिव्याद्यष्टद्रव्यगुणत्वबाधात्। गुणो भूत्वेति—शब्दो द्रव्यस्य गुणः गुणत्वादित्यनुमानमेव पृथिव्याद्यष्टगुणत्वबाधान् तदन्यद्रव्यगुणत्वं साधयदतिरिक्ताकाशस्य साधकमित्यर्थः।

ननु संख्या पृथिव्यादावपि सत्त्वात् कथमाकाशस्य वैधर्म्म्यमत आह (१) शब्दलिङ्गत्वाविशेषादिति—शब्दस्य यल्लिङ्गत्वं व्याप्यत्वं तद-

(१) शब्दलिङ्गादीति पाठान्तरम्।

विशेषादेकत्वं सिद्धं वैधर्म्यत्वेन। तथा च शब्दव्याप्यसंख्यावत्त्वमेव वैधर्म्यं, तच्च न पृथिव्यादाविति भावः। यद्यपि शब्दलिङ्गत्वादित्येव वक्तुमुचितं, तथापि पृथक्त्वसंख्यायामपि कुत्रचित् शब्दव्याप्यत्वमित्यर्थ-लाभार्थं शब्दलिङ्गत्वाविशेषादित्युक्तम्। अत एव शब्दानुविधाय्येव पृथक्त्वं वैधर्म्यमाह तदनुविधानादिति। तस्य शब्दस्य अनुविधानात् व्याप्यत्वात् पृथक्त्वं वैधर्म्यत्वेन सिद्धमित्यर्थः।

ननु परिमाणं द्रव्यमात्रे अतिप्रसक्तमतः शब्दसमवायिनिष्ठपरिमाणमेव आकाशस्य वैधर्म्यं वाच्यं, तच्चाप्रसिद्धं गगनस्य परिमाणवत्त्वे प्रमाणाभावादत आह(२) विभव(३)वचनादिति—महानाकाशस्तथा चात्मेति(४) सूत्रेण गगनस्य विभुत्ववचनादित्यर्थः, परममहत्त्वं परिमाणं सिद्धमिति पूर्वेणान्वयः।

संयोगविभागयोरपि द्रव्यमात्रे अतिप्रसक्तत्वादाह शब्देति। संयोगविभागपदाभ्यां शब्दासमवायिकारणयोः संयोगविभागयोरभिधानात् संयोगविभागौ वैधर्म्यं, शब्दासमवायिकारणस्य मूर्त्तेन सह संयोगस्य विभागस्य गगनादन्यत्र असत्त्वादिति भावः।

यद्यपि प्रागुक्तधर्म्मिग्राहकमानेनास्य द्रव्यत्वं सिद्धं, तथापि संयोगादिमत्त्वादपि तत् साधयितुं शक्यत इति तदप्याह अत इति—संयोगादिमत्त्वादित्यर्थः। अत्र हेत्वन्तरमाह गुणवत्त्वादिति—अग्रिमचकारयोजनया गुणवत्त्वाच्चेत्यर्थः। द्रव्यं द्रव्यत्ववत्। नित्यत्वे प्रमाणमाह अनाश्रितत्वादिति—असमवेतभावत्वादित्यर्थः। नित्यमित्यग्रेतनेनान्वयः। अनाश्रितत्वादित्यस्य विभुत्वादित्यर्थः। तथा च द्रव्यत्वस्यैव साधकोऽयं हेतुरिति यथाश्रुतमेव न्याय्यमिति वदन्ति।

तस्य नित्यत्वं साधयति समानेति। कारणमत्र समवायिकारणं,

---

(२) प्रमाणाभावादाहेति पाठान्तरम्। (३) विभु इति पाठान्तरम्।

(४) तथा चात्मा चेति इति पाठान्तरम्।

तच्च आकाशस्य सजातीयं विजातीयञ्च नास्ति। नहि आकाश-सजातीयमाकाशान्तरमस्ति, नापि तद्विजातीयं पृथिव्यादिकं तत्-समवायिकारणं घटादिकारणकस्य रूपादेरिव गुणत्वस्य कर्म्मत्वस्य वा प्रसङ्गात्। पृथिव्यादेस्तु सजातीयपृथिव्यादिरिव गुणकर्म्मणोस्तु विजातीयं द्रव्यमेव समवायिकारणम्।

तस्य इन्द्रियप्रकृतित्वं दर्शयति सर्वप्राणिनामिति। ननु विभुन-स्तस्य सर्वप्राणिनां शब्दोपलब्धिनिमित्तत्वे सर्वेषामेव सर्वशब्दोपलब्धि-प्रसङ्ग इत्यत आह श्रोत्रभावेनेति। ननु तथापि स दोषः, तस्य विभुनः श्रोत्रभावादित्यत आह श्रोत्रं पुनरिति। ननु श्रवणविवरसत्त्वे कथं कश्चिद् वधिर इत्यत आह शब्दनिमित्तेति। उपभोग्यवीणादिशब्दा विषयतया निमित्तानि यस्य तादृशो य उपभोगस्तत्प्रापकाभ्यां धर्म्माधर्म्माभ्याम् उपनिबद्ध इत्यर्थः। तथा च तादृशधर्म्माधर्म्मरहितस्य तादृशविवरसत्त्वेऽपि वाधिर्य्यमित्याह तस्य चेति।

---

## सूक्तिदीपिका

अथ किमाकाशादिसंज्ञाया नैमित्तिकत्वं वा पारिभाषिकत्वं वा औपाधि-कत्वं वेति विचारयितुं पूर्वपक्षमुपन्यस्यन् पारिभाषिकतया उपसंहरति गर्गरी-त्यादिना।—गर्गरी घटश्चेत्यनर्थान्तरम्। तथाहि यः खलु गर्गर्य्यादिभेदेन आकाशादिभेदः समुपलभ्यते, स उपाधिकृत एव, न तु वास्तवः, अत आकाशत्वादौ नित्यानेकसमवेतत्वरूपजातिलक्षणसमन्वयाभावात् तदवच्छिन्न-सङ्केतवती आकाशादिसंज्ञा न नैमित्तिकी, परमाकाशत्वादेरुभयावृत्तिधर्म्मतया तदवच्छिन्नसङ्केतवत्त्वात् पारिभाषिक्येव। तदुक्तं स्वयमेव जगदीशेन शब्द-शक्तिप्रकाशिकायां 'जात्यवच्छिन्नसङ्केतवती नैमित्तिकी मते'ति। 'उभया-वृत्तिधर्म्मेण संज्ञा स्यात् पारिभाषिकी' इति च। औपाधिकत्वमपि आका-शत्वादेरेकमात्रवृत्तिधर्म्मतयैव शक्यं निरसितुम्। अत एव शब्दशक्तिप्रकाशि-कायां 'शब्दादिकन्तु सखण्डत्वेन उपाधिरपि नानुगतो द्वितयावृत्तित्वादतः

पारिभाषिके नातिप्रसङ्ग' इत्युक्तम्। भूतादिसंज्ञैव 'औपाधिकी त्वनुगतोपाधिना या प्रवर्त्तत' इति लक्षणसमन्वयादौपाधिकी भवति इति विभाव्यम्।

यद्यपि कालत्वदिक्त्वयोर्जातित्वनिराकरणं तत्तन्निरूपणावसरे कर्त्तव्यं, तथापि लाघवानुरोधेन प्रसङ्गादत्रैवोक्तमिति ध्येयम्।

तत इति पञ्चम्यर्थो हेतुत्वं, तच्च अपरजातेरभावेऽन्वेति। सति सप्तम्याः प्रयोज्यत्वमर्थः, स चार्थः पारिभाषिकत्वे अन्वेति। तथाहि आकाशनिष्ठभेदाप्रतियोगित्वव्याप्यापरजात्यभावप्रयोज्यमाकाशपदस्य पारिभाषिकत्वमित्यर्थः।

ननु कथमिदं सङ्गच्छते आकाशे सत्तावान्तरद्रव्यत्वजातेः सत्त्वेन व्यभिचारादित्यतः अपरजातिपदस्य द्रव्यत्वावान्तरजातिरूपमर्थमनुसन्धत्ते द्रव्यत्वेत्यादिना। तथा च सत्तावान्तरद्रव्यत्वजातेराकाशादौ सत्त्वेऽपि द्रव्यत्वावान्तरजातेरसत्त्वेन न क्षतिः। तदुक्तं मुक्तावल्यां 'आकाशकालदिशामेकव्यक्तिकत्वादाकाशत्वादिकं न जातिः, किन्तु आकाशत्वं शब्दाश्रयत्वम्' इति।

आकाशनिष्ठभेदाप्रतियोगित्वहेतोः प्रकृते पक्षमात्रवृत्तित्वेन साध्यहेत्वोः सहचारग्रहासम्भवाद् व्यतिरेकमुखेन व्याप्तिमुपसंहरति यन्नैवमित्यादिना।

हेतोरिति—आकाशनिष्ठभेदाप्रतियोगित्वहेतोरित्यर्थः।

स्वरूपासिद्धिरिति—घटादिभेदेन आकाशस्य भेदसत्त्वादाकाशनिष्ठभेदाप्रतियोगित्वस्य आकाशे अभावादित्यभिप्रायः।

अग्र इत्यादि—शब्दलिङ्गत्वाविशेषादेकत्वं सिद्धमित्यत्रेत्यर्थः। प्रतिकर्त्तव्यत्वादिति—अस्य दोषस्य निराकरिष्यमाणत्वादित्यर्थः। तथाहि यत आकाशादेर्घटादिभेदाद् भेदो न वास्तवः, परमौपाधिक एव, अतो न प्रकृतसाध्यसाधको हेतुः स्वरूपासिद्ध इति भावः।

यद्यपीत्यादि—ग्रन्थोऽयं 'यद्वाधुनिकसङ्केतशालि स्यात् पारिभाषिक'मिति पारिभाषिकलक्षणाभिप्रायमूलः। तन्मते आकाशपदादेरौपाधिकत्वमेवेति स्वयं तत्राप्युक्तं जगदीशेन।

अन्यथेति—गगनपदात् शब्दवत्त्वरूपधर्मान्तरावच्छिन्नस्य उपस्थितिपरिकल्पने इत्यर्थः। पौनरुक्त्यापत्तेरिति—घटो घट इत्यादिस्थल इव आकाशं शब्दवदित्यत्रापि उद्देश्यतावच्छेदकविधेयतावच्छेदकयोरैक्येन शाब्दबोधानुप-

अपरे पचा विनिगमनाविरहेण अविशेषतः स्वीकार्य्या अपि 'सूक्तिं श्रीजगदीशस्य चिन्तयन्तु विचक्षणाः' इति प्रारम्भश्लोके जगदीशेन कथञ्चित् नामसूचनायाः कृतत्वसम्भावनात् तद्विसदृशास्ते परिहीयन्ते (१)। नाम तु अस्य जगदीशसूक्तिरित्येव स्यात् 'जगदीशस्य सूक्ति'मित्येवमस्य निर्देशात्। अत एव अस्माभिरस्याः जगदीशसूक्तिरित्येव संज्ञा परिगृहीतास्ते ग्रन्थकारैरकृते विशेषोल्लेखे विविधनामकल्पनायां स्वातन्त्र्येऽपि विशेषोल्लेखेन तद्भावस्य सम्भवात्। विविधपुष्पिकादर्शनात् सर्वेषामेव निरुक्तपदानामेकपर्य्यायतया (२) प्रकृतभाष्यनामत्वमित्यपि केचित्। एवं च सत्स्वपि तथा संज्ञाभेदेषु दृश्यमानेषु द्रव्यभाष्यटीका भाष्यसूक्तिः द्रव्यभाष्यसूक्तिः जगदीशसूक्तिरित्येतत् सर्वमेकमेवेति वस्तुगतिः।

चिन्तामणिदीधितिप्रकाशिकादिग्रन्थानामिव नास्ति सूक्तेरद्यापि नव्यनैयायिकविद्वत्सु भूयान् प्रचारः, किं बहुना जगदीशस्य प्रशस्तभाष्यसूक्तिरियमस्तीत्येव बहवो न जानन्ति का कथा तदालोचनतत्त्वनिर्द्धारणयोः। एवंरीत्या कति ग्रन्थाः प्राचीनानां लोकलोचनान्तराले स्ववैयर्थ्यमनुसन्दधते।

**किरणावल्यादिकमादर्शीकृत्य जगदीशस्य सूक्तिनिर्माणसम्भावनम्**—अयं ग्रन्थः श्रीजगदीशेन प्रशस्तपादभाष्यस्य प्रशस्तिमतीं टीकां किरणावलीमनुध्याय न्यायकन्दलीमनुसृत्य च विरचित इति सम्भाव्यते बहुत्र व्याख्यायां तदीयक्रमानुसरणस्य (३) दृष्टत्वात् अन्तरान्तरा तत्कृतव्याख्यायाः

---

(१) जगदीशस्य सूक्तिमित्यनेन जगदीशशब्दस्यापि संज्ञाघटकत्वं सम्भाव्यते, निरुक्तसंज्ञानाञ्च कस्या अपि संज्ञाया जगदीशशब्दाघटितत्वेन सम्भावितनाम्ना वैसादृश्यमनुसन्धीयते।

(२) विभिन्नानुपूर्वीकत्वे सति एकार्थबोधकत्वं पर्य्यायत्वम् इति प्राचः।

(३) ईश्वरं प्रणम्य अत ईश्वरप्रणामादनु पश्चात् कणादं प्रणम्येत्यन्वयः इति जगदीशसूक्तौ, अतः ईश्वरप्रणामादनु पश्चात् कणादनामानं मुनिं प्रणम्येत्यनुषज्यते इति किरणावल्याम् ईश्वरमादौ प्रणम्य ईश्वरप्रणामादनु पश्चात् कणादं प्रणम्येत्यर्थः इति न्यायकन्दल्याम्। इत्येवं बहुत्र।

प्रमाणादिकपेक्षा समुद्धारात् (१) दोषोद्घाटनमुखेन च क्वचित् क्वचित् तद्ग्रन्थार्थस्मरणात् (२) स्वप्रतिपादितार्थभिन्नार्थकतदीयसन्दर्भसमावेदनाच्चेति (३)। उदयन श्रीधराचार्य्यापेक्षया जगदीशस्य अर्वाचीनत्वन्तु सिद्धमेव।

किरणावल्यादिकमनुसृत्य जगदीशेन द्रव्यभाष्यटीकाया निर्म्माणे सत्यपि किरणावल्यादिस्वीकृतप्रशस्तपादभाष्यपाठात् अन्यथा (४) पाठः क्वचित् क्वचित् स्वीकृतो जगदीशेनेति तदीयसूक्तिपर्य्यालोचनात् प्रतीयते। क्वचिच्च प्रशस्तपादाचार्य्यभाष्यावलम्बनसूत्राणामपि प्रसिद्धपाठपरित्यागेन अन्यथापाठः (५)

---

(१) अयञ्च क्रमः श्रुतिसिद्धत्वादुपास्य इत्याचार्य्या इत्यादि जगदीशसूक्तौ। अत इति इमौ प्रमाणान्तः, अत पदस्य ल्यब्लोपे पञ्चम्या साधनात् यतः सच्छिष्या उपसन्ना अतः प्रवक्ष्यत इत्यर्थ इत्याचार्य्याः। निशीत्यस्य 'निशातुल्य इत्यर्थ इति त्वाचार्य्या इत्यादि बहुच।

(२) प्रलयहेतुभूतादृष्टेनैव जन्यद्रव्यनिरोधकमिति आचार्य्यमतन्तु प्रलयप्राक्क्षण एव तादृशादृष्टस्योत्पत्त्यभ्युपगमे शोभत इति ध्येयम् इति जगदीशसूक्तौ।

(३) सृष्टिसंहारस्य सृष्टिप्राक्कालीनप्रलयस्य तेन महाप्रलयस्य व्युदासः। विधिः क्रमः सृष्टिसंहारयोः उत्पत्तिप्रलययोः विधिः कथ्यत इत्यर्थ इत्याचार्य्या इति सूक्तौ। महाभूतानां सृष्टिसंहारयोर्द्वयोर्विधानस्य प्रतिज्ञातत्वात् संहारविधिमुक्त्वा सृष्टिमाह तत इति त्वाचार्य्यस्वरससिद्धस्तत इत्यस्यावतारक्रमः। इति सूक्तौ। निशीत्यस्य निशातुल्य इत्यर्थ इति त्वाचार्य्या इत्यादि च सूक्तौ बहुव।

(४) तत्रेश्वरनोदनाभिव्यक्ताद्धर्म्मादेव इति पाठमङ्गीकृत्य किरणावल्याम् ईश्वरस्य नोदना उपदेशः वेद इति यावत् तेनाभिव्यक्तात् प्रतिपादितात् धर्म्मादित्यर्थः कृतः। सूक्तौ तु तत्रेश्वरदेशनाभिव्यक्ताद्धर्म्मादेवेति पाठमङ्गीकृत्य ईश्वरदेशनया वेदेन अभिव्यक्तात् प्रतिपादितादात्मधर्म्मिकश्रवणमननाद्यात्मकधर्म्मादित्यर्थः कृतः। अस्पर्शवत्त्वाद्द्रव्यानारम्भकत्वं क्रियावत्त्वान्मूर्त्तत्वमिति किरणावलीसम्मतमनोनिरूपणग्रन्थादेः अस्पर्शत्वाद्द्रव्यानारम्भकक्रियावत्त्वान्मूर्त्तत्वमित्याद्यन्यथाकारश्च।

(५) आत्मान्तरगुणानामात्मान्तरेऽकारणत्वादिति सूत्रस्य आत्मान्तरगुणानामात्मान्तरगुणेष्वकारणत्वादित्यन्यथापाठः। इत्यादि बहुलमूह्यम्।

परिगृहीतस्तैरित्यपि तदीयटीका प्रमाणयति। क्वचित् सूत्रानुपूर्व्या अन्यथाकारः, क्वचिच्च एकस्यैव सूत्रस्य द्वैधेन परिग्रह इत्येवं नानाविधं वैषम्यमनुगृहीतं जगदीशेनेति स्पष्टमालोचनया प्रतिभाति (१)। सर्वमिदमस्मदादर्शानुसारेण उपन्यस्तानां सूक्तिसन्दर्भाणां सविशेषालोचनया प्रतिभायात्।

अस्माभिः जगदीशसूक्तिसम्मतपाठानुगतप्रशस्तपादभाष्यादर्शस्य साकल्येन क्वापि अलाभात् यथामति सूक्तिपर्य्यालोचनया तत्सम्मतपाठानुगतभाष्यसन्दर्भव्यवस्था कृता, परतश्च अनवधानेन यत्र यत्र प्रशस्तपादभाष्यसन्दर्भेण सूक्तिपाठस्य वैषम्यं विदुषां प्रतिभासेत तत्र तत्र सविवेकपाठकल्पनया सूक्त्यर्था उपपादयितव्याः।

**जगदीशतर्कालङ्कारपरिचयः**—अथ जगदीशस्य विशेषतो वैयक्तिकविचारे प्रतिपित्सिते वयमेवं प्रतिपादयामः—जगदीशो नाम श्रीचैतन्यमहाप्रभोः श्वशुरात् सनातनमिश्रात् चतुर्थः पुरुषः। श्रीचैतन्यमहाप्रभुश्च खृष्टीये पञ्चाशीत्यधिकचतुर्दशशततमाब्दे प्रादुरभूदिति इतिहासविदामाशयः। तेन च जगदीशस्य पञ्चाधिकषोडशशततमखृष्टवत्सरे जन्मेति कल्प्यते। एतस्य तर्कामृतग्रन्थखण्डस्य एकत्रिंशदधिकषोडशशततमवत्सरो लेखकालः समुपलभ्यते, तेनापि तथा कल्पनं दृढीभवति। उक्तञ्च विद्वद्भिः न्यायकन्दलीभूमिकायां यथा—'जगदीशभट्टाचार्य्यकृतशब्दशक्तिप्रकाशिकापुस्तकस्य १६२४ शालिवाहनशकलिखितस्योपलम्भात् तत्समयात् पूर्वं तद्ग्रन्थकर्त्तुः स्थितिरिति सुव्यक्तम्' इति।

यत्तु नवनवत्यधिकपञ्चदशशततमखृष्टीयाब्दे तदीयशिष्येण केनापि तत्कृतकाव्यप्रकाशरहस्यटीकायाः स्वहस्तलिखिताया उपलम्भाऽपि तत्र मान-

---

(१) व्यवस्थातो नाना इत्यस्य नानात्मानो व्यवस्थात इति अन्यथाकारः। कारणे काल इत्यस्य कारणे कालाख्या इत्यन्यथाकारः। कारणपरत्वात् कारणापरत्वाच्च इत्येतन्मात्रस्य उपस्कारादिसम्मतसूत्रस्य कारणपरत्वात् कारणापरत्वाच्च परत्वापरत्वे इति पाठो जगदीशेन कृतः।

मिति तत्र लेशतोऽपि पेशलं जगदीशस्य काव्यप्रकाशरहस्यनिर्म्मातृतायाः सर्वथा अत्रैव निराकृतपूर्वत्वात्।

स चायं शैशवे सुतरां चञ्चलस्वभाव आसीदिति नानाविधकिंवदन्त्यादिभिः (१) सुस्थितं भवति। स हि अष्टादशसंवत्सरे वयसि तर्केषु बहुटीकामूलग्रन्थकृताम श्रीभवानन्दसिद्धान्तवागीशभट्टाचार्य्याणां चतुष्पाठीं विद्यापरिग्रहाय समलङ्कृतवान् (२)। जगदीशकृत-मणिमयूख(३)ग्रन्थप्रामाण्येन न्यायरहस्यप्रणेतारः श्रीरामभद्रसार्वभौमा अपि तदीयगुरव इति निर्णीयते। एतैरपि रामभद्रसार्वभौमैः रामभद्रीत्याख्या कुसुमाञ्जलिटीका निर्म्मितेति।

श्रीमता जगदीशेन अनेके तार्किकप्रकरणग्रन्थाः अनेकाश्च तार्किकटीका निबद्धाः समुपलभ्यन्ते। तेषु ग्रन्थेषु च चिन्तामणिदीधितिप्रकाशिका सुतरां प्रशस्यते। तत्रापि व्याप्तिज्ञानकाण्डयोर्व्याप्तिवादे परमं नैपुण्यमेषां प्रतिपन्नं भवति, येन प्रथितयशसां तार्किकप्रकाण्डानां गदाधरसुधियां ग्रन्थमतीत्यापि व्याप्तिवादे जगदीशटीकामेव सुमेधसः समभ्यस्यन्तीति। अयमेव प्रभेदः तत्रभवतोर्व्याख्यातृमुख्ययोर्जगदीशगदाधरयोर्यत् जगदीशः जिज्ञासितमर्थमात्रं स्वल्पाक्षरेण परिष्कृत्य जिज्ञासां विनिवर्त्तयते, गदाधरश्च बहुना प्रपञ्चेन जिज्ञासावतां चित्तमुत्क्षिप्य तामपाकरोतीति तदेवमनयोः प्राचीनैरपि प्रकर्षापकर्षविचारे चित्तविनियोगं कृतमनुपश्यामः। येन गदाधरग्रन्थान् पाँचाली इत्याख्यया पूर्वं व्यवहरन्ति स्म, कालेन पुनर्लाघवात् जनिमतां बुद्धेः सविस्तर एव ग्रन्थः समपेक्षित इति महती प्रशस्तिः प्रादुरभवन्नव्यसम्प्रदायेषु गदाधरग्रन्थानाम्।

---

(१) अत्र जयचन्द्रसिद्धान्तभूषणसम्पादितशब्दशक्तिप्रकाशिकाग्रन्थभूमिकादिकं द्रष्टव्यम्।

(२) श्रीभवानन्दसिद्धान्तवागीशेन कारकचक्रं नाम कारकार्थप्रतिपादकग्रन्थरत्नं तथा चिन्तामणिदीधितिव्याख्यादिकं निर्मितमिति।

(३) "श्रीसार्व्वभौमस्य गुरोः पदाब्जं विद्यार्थिनां कल्पतरोः प्रणम्य। विनिर्मितं श्रीजगदीशविज्ञैर्विद्योततामद्य मणेर्मयूखः।" इति ( Descriptive Catalogue of Mss. in Sanskrit College, Calcutta III P. 324 No. 575 ) शब्दशक्तिप्रकाशिकाग्रन्थे च स्वयमेव जगदीशेनोक्तं—'इति पुनर्न्यायरहस्ये अस्मद्गुरुचरणाः' इति।

**जगदीशनिबन्धेषु भाष्यसूक्तेः प्राथम्यविचारः**—जगदीशकृतसूक्तिलेखशैलीं तदीयापरग्रन्थलेखशैलीञ्च पर्य्यालोच्य सूक्तिरियं तदीया पूर्वा कृतिरित्येव प्रतिभासते। एतत्सूक्तिनिर्म्माणावसरे पदार्थतत्त्वानि प्राक्प्रसिद्धानि आलोचितवतो मनसि संक्षिप्तपदार्थतत्त्वनिर्णायकग्रन्थनिर्म्माणाभिलाषस्य समुत्पत्त्या समनन्तरमेव संक्षिप्तरूपेण पदार्थतत्त्वनिर्णायक-तर्कामृतग्रन्थ-निर्म्माणमिति स्यात्। अपरलेखापेक्षया सुतरामदृढैव लेखशैली प्रशस्तपाद-भाष्यसूक्तेरित्यत्र निपुणसमालोचका एव प्रमाणम्। अपि च चिन्तामणि-दीधितिप्रकाशिकालेखस्य सुदृढ़बन्धस्य परत एव सम्भाव्यत्वात् तदुपक्रमे कृते अन्तरा भाष्यसूक्तिनिर्म्माणप्रवृत्तेरसम्भाव्यत्वाच्च प्रथमत एवाप्रतिष्ठावस्थायां तथाभूतादृढ़बन्धटीकानिर्म्माणं सुसङ्गतं भवतीति विश्वसिमः।

किञ्च क्रमेण ग्रन्थनिर्म्माणे प्रावीण्यमुपगतस्य स्वीयप्रौढ़विज्ञाने विश्वास-समुदयात् अनन्तरकृते तर्कामृते स्वयमेव निरुपमत्वविशेषणं (१) सङ्गच्छते, सूक्तिनिर्म्माणप्रारम्भे तु तथा आत्मनः प्रौढ़विज्ञाने विश्वासाभावात् केवलं विचक्षणानां तद्ग्रन्थचिन्तनाभ्यर्थनमेव(२) कृतं जगदीशेनेति इतोऽपि तर्कामृतस्य सूक्त्यपेक्षया उत्तरकालकृतत्वमायाति।

किञ्च प्रशस्तपादभाष्यव्याख्यां कृतवता जगदीशेन यत्र यत्र ग्रन्थस्य न्यूनता व्यलोकि तत्र तत्र स्वीयतर्कामृतग्रन्थे परिपूरणं कृतमित्येव दृश्यते, (३) न तु तत्र टीकायां तदुल्लेखः कृतः। यदि तर्कामृतं पूर्वनिर्म्मितं स्यात् तदा तत्र तत्र टीकास्थले यथा कथञ्चित् प्रसङ्गेन तदुल्लेखः कृतः स्यात्, न चैवं कृतम्। अस्ति

---

(१) 'ब्रह्माद्या निखिलार्चितास्त्रिदशसन्दोहाः सदाभीष्टदाः, अज्ञानप्रशमाय यत्र मनसो वृत्तिं समस्तां दधुः। श्रीविश्वेश्वरपादाम्बुजं भवभयध्वंसैकबीजं परं, हृत्पद्मे विनिधाय तन्निरुपमं तर्कामृतं तन्यते।' इति तर्कामृतम्।

(२) 'कणभक्षमुनेः पदरचाविन्यस्तवासनाः। सूक्तिं श्रीजगदीशस्य चिन्तयन्तु विचक्षणाः।' इति सूक्तिः।

(३) 'अथ श्रुतिः श्रूयते' इत्यारभ्य 'संक्षेपतः पदार्थौ द्विविधः भावोऽभावश्च' इत्यादि तर्कामृतग्रन्थाः पर्य्यवेक्षणीयाः।

चेयं शैली ग्रन्थकृतां यत् समानविषये सति स्वकृते ग्रन्थान्तरे अनुषङ्गतः तत्-प्रतिपादितमर्थं ते सूचयित्वा प्रकृतग्रन्थलाघवमभिप्रयन्तीति (१)। तर्कामृत-ग्रन्थस्य अपरस्य वा जगदीशकृतस्य ग्रन्थान्तरस्य सूक्तौ नामापि नोपलभ्यते। न च तेनैव हेतुना वैपरीत्यमपि कथं न सम्भाव्यतामिति वाच्यं तर्कामृत-ग्रन्थस्य समग्रविषयविज्ञापकप्रकरणतया सूक्तिसंहितविषयाङ्कारस्य तत्रापेक्षा-भावात् सत्तात्मनः सविशेषाख्यानाहित्यस्यापि सुसम्भवत्वाच्च।

किञ्च जगदीशसूक्तौ दृश्यते बहुत्र आचार्य्यमतानुवर्त्तनमात्रं पदे पदे च आचार्य्यमतसमुल्लेखेन आत्ममतसमर्थनादिकम्। तदपि तट्टीकाया प्रथम-लिखितत्वं प्रमाणयति। यावत् तर्केषु सिद्धिमात्मनो नोपलक्षितवान् ताव-देव परमतप्रमाणेनात्मनो मतस्य प्रामाण्यमुपपादयितुं सप्रयत्न आसीदित्येव सुयुक्तिकम्, यावच्च तर्के सिद्धिमात्मनः समुत्प्रेक्षितवान् तावदेव स्वमभ्रान्तं मत्वा स्ववचनमेव प्रमाणरूपेण पर्य्याप्तं मेने इति स्थितम्।

तदेवं बहुभिरेव हेतुभिः जगदीशसूक्तिः श्रीजगदीशतर्कालङ्कारभट्टाचा-र्य्याणां प्रथमो ग्रन्थ इति निश्चेतुं शक्यते, तत एव च तार्किकसमाजेषु तथा तस्य प्रसिद्धिर्नोपलभ्यते, ग्रन्थगतप्रौढ़िप्रकर्षस्यैव प्रायेण ग्रन्थप्रकर्षप्रयोजकत्वात्। न च तथात्वेऽपि द्रव्यभाष्यटीकाया अप्रामाणिकत्वं शङ्कनीयं प्रायेण प्रतिपदं तस्या मूलानुगतत्वात् बहुत्रैव उदयनमार्गानुसारित्वाच्च। अत एव मूलभूत-प्रशस्तपादभाष्यस्य ऋषिप्रणीतस्य तर्केषु लब्धसिद्धभावस्य उदयनस्य किरणा-वल्याश्च प्रामाण्येनैव एतत्प्रामाण्यं निरपवादं व्यवतिष्ठते।

**सम्पादकीयविशेषनिवेदनम्**—सूक्तिरियमद्य यावत् न केनापि साक-ल्येन प्रकाशिता, चौखाम्बा-संस्कृतग्रन्थमालायां अस्या अंशतः प्रकाशने कृतेऽपि तदंशस्य बहुलप्रमादपर्य्यालोचनया संस्कृतसाहित्यपरिषदा सेयं प्रकाश्यते। अहञ्च तत्र नियुक्तः सम्पादकरूपेण यथामति आदर्शद्वयीं सूक्तेः प्रविचार्य्य वाराणसीमुद्रितवैशेषिकदर्शनादिसाहाय्येन पाठभेदादिकं विनिर्दिश्य प्रथमतः प्रशस्तपादभाष्यं प्रकरणभेदेन सन्निवेश्य ततस्तदवलम्बनसूत्राणि

---

(१) तत्रागुणवत्त्वमिति साधर्म्यव्याख्यानावसरे गुणप्रकाशरहस्ये तद्दीधितिरहस्ये च स्फुटम् इति व्याप्तिपञ्चके मथुरानाथः।

ततो जगदीशसूक्तिं तदनन्तरं स्वकृतां सूक्तिदीपिकानाम्नीं संस्कृतमयीं सूक्तिविवृतिं ततोऽपि वङ्गभाषामयं भाषातात्पर्यं विन्यस्य पुनः पादटीकायां विविधपाठान्तरादिकञ्चोपनिबध्य आरब्धमस्याः सम्पादनम्। तत्र यथाशक्ति समुत्कर्षसाधने कृतं प्रयत्नशतम्, साफल्ये तु प्रमाणं विपश्चित एव।

अस्य वस्तुनः सम्पादने प्रथमतः समुपकृतं मे संस्कृतसाहित्यपरिषद्ग्रन्थालयेन सूक्तेरादर्शद्वयीं वितीर्णवता।

पदार्थतत्त्वविज्ञानविशेषे च परमनुगृहीतोऽस्मि तार्किककुलमुकुटालङ्कारहीरैः तत्रभवद्भिः महामहोपाध्याय श्रीकामाख्यानाथ तर्कवागीशपादैः परमपूज्यपादतार्किकप्रवरैः स्वीयपितृदेवैश्च श्रीहरिदासतर्कतीर्थमहाभागैः।

एतद्भूमिकागतवस्तुविशेषसंग्रहणेन च नितरामुपकृतोऽस्मि परमस्नेहास्पदेन मदीयान्तेवासिना एम्-ए काव्यतीर्थोपाधिकेन श्रीमता चिन्ताहरणचक्रवर्त्तिना, यस्य प्रतिभातिभारो बहुषु प्रत्नतत्त्वादिवस्तुषु स्वल्पेनैव कालेन व्यश्रूयत। तदयं श्रीमान् सुदीर्घं जीवनात्मनः प्रतिभया यशो महदनुभूयात्। लब्धश्च मया सुमहानुपकारः काशीधामनि प्रकाशितेभ्यः माननीयविन्ध्येश्वरीप्रसादद्विवेदिसम्पादित-न्यायकन्दलीसहितप्रशस्तपादभाष्यग्रन्थादिभ्यः। तदेतेषां सर्वेषामेव यथासम्भवसम्माननादिपुरःसरं वयं कृतवेदितामावेदयामः।

अन्ते च विपश्चितामन्ते विज्ञापयामः—यत् हंसवृत्तिमुपाददानाः श्रीमन्तः सन्तमत्र गुणलेशमपि परिगृह्णन्तु, दोषांश्च भूयसोऽपि मय्येव विज्ञापयितुं परिवर्जयन्त्विति।

१३३२ वङ्गाब्दीय-<br>चैत्रसंक्रान्त्याम्

सुधीविधेय—<br>श्रीकालीपददेवशर्म्मणः

---

ॐ नमः परमात्मने

# वैशेषिकदर्शने

## प्रशस्तपादभाष्यं जगदीशसूक्तिसहितम्



प्रशस्तपादभाष्यम्

प्रणम्य हेतुमीश्वरं मुनिं कणादमन्वतः ।

पदार्थधर्म्मसंग्रहः प्रवक्ष्यते महोदयः ॥

[ अथातो धर्म्मं व्याख्यास्यामः । १अ । १आ । १सूत्रमालम्बनम् ]

—००—

जगदीशसूक्तिः

ॐ नमो दुर्गायै (१) ।

कणभक्षमुनेः पक्षरक्षाविन्यस्तवासनाः ।

सूक्तिं श्रीजगदीशस्य चिन्तयन्तु विचक्षणाः ॥

ग्रन्थारम्भे विघ्नविघाताय कृतस्य ईश्वर(२)प्रणामस्य शिष्याणां शिक्षार्थमादौ निबन्धपूर्वकं प्रवृत्त्यङ्गमभिधेयं दर्शयति प्रशस्तकरपादाचार्य्यः(३) प्रणम्येति। ईश्वरं प्रणम्य, अतः ईश्वरप्रणामात् अनु पश्चात् कणादं प्रणम्येत्यन्वयः। यद्वा ईश्वरं प्रणम्य अनु पश्चात् कणादं प्रणम्य

---

(१) ॰ ओं नमः शिवाय (ख)पुस्तके ।

(२) ईश्वरादि (ख) पु ं ।

(३) प्रशस्तपादाचार्य्यः (ख) पु ं ।

अतः इमौ ईश्वरकणादौ प्रसाद्य वच्यत इत्यन्वयः। इमौ प्रसाद्येत्यर्थे अतःपदस्य ल्यब्लोपे पञ्चम्या (४) साधनात्। यतः सच्छिष्या उपसन्ना अतः प्रवच्यत (५) इत्याचार्य्याः। वस्तुतः अतः अनेन प्रशस्तकरपादाचार्य्येणेत्यर्थः। 'सर्वविभक्तिभ्यस्तस्' इति तृतीयायास्तस्विधानादिति युक्तमुत्पश्यामः (६)।

पदार्थानां भावपदार्थानां (७) ये धर्म्माः साधर्म्म्यवैधर्म्म्यरूपास्तेषां संग्रहः संक्षेपेण कथनं यत्र स पदार्थधर्म्मसंग्रहः भाष्यनामा ग्रन्थः। प्रवच्यते प्रकृष्टं यथा स्यात् तथा वच्यते। वचनस्य प्रकर्षश्चात्र साकाङ्क्षत्व-योग्यत्वादिरूपो ग्राह्यः, संक्षिप्तत्वस्य संग्रहपदेनैव प्राप्तत्वात्।

ग्रन्थासम्पादकस्य ईश्वरस्य ग्रन्थनिर्व्वाहार्थं नतिर्व्यर्थेत्याशङ्कामपनेतुमीश्वरं विशेषयति हेतुमिति। कार्य्यमात्रस्य हेतुभूतमिति तदर्थः।

ननु कणादोक्तानामेव पदार्थधर्म्माणां यदि संक्षेपेण संग्रहः क्रियते, तदा जीवत्वेन(८) विप्रलम्भकस्य कणादस्यैव वचसि विवेचकानां नास्था, प्रागेव तदुक्तस्य संक्षेपेण वचने इत्याशङ्कामपाकुर्व्वन् कणादं विशेषयति मुनिमिति मननशीलमित्यर्थः। तथा च मुनेर्मुक्त्यन्यफलनिरपेक्षत्वात् कणादस्य विप्रलम्भकत्वं बाधितमिति भावः।

स्वीयग्रन्थे (९) शिष्याणां प्रवृत्त्यर्थं फलवत्तां दर्शयति महोदय इति। महान् उत्कृष्टस्तत्त्वज्ञानरूप (१०) उदयो बोधो यस्मात् स महोदयः भाष्यनामा (११) ग्रन्थः।

---

(४) पञ्चम्याः (ख) पुं।

(५) इत्यर्थ इत्याचार्य्याः (ख) पुं।

(६) 'वस्तुत' इत्यारभ्य 'पश्याम' इत्यन्तपाठो हि (ख) पुस्तके नास्ति।

(७) पदस्यार्थानां (ख) पुं।

(८) जीवित्वेन (ख) पुं।

(९) स्वकीयग्रन्थे (ख) पुं।

(१०) शुद्धज्ञानरूपः (ख) पुं।

(११) भाष्यनामा इति पाठः (ख) पुस्तके नास्ति।

## सूक्तिदीपिका

यत्पादनीरजरजःपरिधूसराङ्गः
सर्व्वत्र सिद्धिमधिगन्तुमधीश्वरः स्याम्।
पित्रोस्तयोः पदसरोजरजः प्रशस्यं
शीर्षे तथा हृदि निधाय विधिं विदध्याम्।

दुर्गाचरणनिषक्तं हरिपदरक्तं श्रितन्यायम्।
सपदि कृपामयतातं शिवमनुवेलं शिवं वन्दे॥

निर्व्विघ्नेन प्रारिप्सितसूक्तिपरिसमाप्तिकामः श्रीमान् जगदीशो दुर्गमपदप्रशस्तपादभाष्यतत्त्वेषु स्वप्रकाशमभिवाञ्छन् शिवशक्तिं भगवतीं दुर्गामभिष्टौति नम इत्यादिना।

कणभक्ष्यमुनेरिति पाठे—कणाः शस्यकणाः भक्ष्याः भक्षणीयाः जीविकोपायत्वेन यस्य मुनेस्तस्येति व्युत्पत्त्या कणादस्येत्यर्थः। तदुक्तं न्यायकन्दलीग्रन्थे श्रीधराचार्य्यैः—'तस्य कापोतीं वृत्तिमनुतिष्ठतो रथ्यानिपतितांस्तण्डुलकणानादाय प्रत्यहं कृताहारनिमित्ता संज्ञा' इति। प्रकृतं कर्त्तरि सिद्धम्। पक्षः सिद्धान्तः तस्य रक्षायां परप्रदत्तदोषनिराकरणेनेति शेषः। विन्यस्तवासनाः सकामाः। चिन्तयन्तु स्मरन्तु, न तु केवलमाम्रेड़ितमेव कुर्व्वन्तु। तथाहि एतत्स्मृतिमन्तरेण दुर्गमभाष्यार्थप्रकाशविरहात् असुकरा किल कणादपक्षरक्षेति भावः।

विघ्नविघातायेति—प्रारिप्सितसमाप्तिप्रतिबन्धकीभूतदुरदृष्टविध्वंसायेत्यर्थः। यद्यपि 'समाप्तिकामो मङ्गलमाचरेद्' इति शिष्टाचारानुमितश्रुत्या मङ्गलाचरणस्य समाप्तिरेव फल-मुपगम्यते, न तु विघ्नविघातोऽपि, तथापि मङ्गलाचरणानन्तरमेव समाप्त्यदर्शनात् तज्जन्यादृष्टकल्पनावत् सत्स्वपि मङ्गलाचरणचयेषु कादम्बर्य्यादौ निर्व्विघ्नग्रन्थसमाप्तिविरहतो विघ्नध्वंसस्यापि अनुरूपमङ्गलाचरणप्रयोज्यस्य समाप्तिसाधकत्वं कल्पनीयम्, अन्यथा मङ्गलाचरणजन्यशुभादृष्टसम्बलनस्य तत्रापि स्वीकर्त्तव्यतया समाप्त्यसत्त्वेन समाप्तिं प्रत्यपि तत्कारणताया दुर्ग्रहत्वापत्तेः, व्यभिचारग्रहस्य कारणताग्रहविरोधित्वादिति। मङ्गलाचरणस्य विघ्नध्वंस एव फलं, समाप्तिस्तु बुद्धिप्रतिभादिकारणकलापादिति श्रुवाणानां नव्यानान्तु यथाश्रुतमेव सम्यक्।

न चैवं 'नाभुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपी'ति:शास्त्रं विरुध्यत इति वाच्यं भोगमन्तरेणापि प्रायश्चित्तादिना पापनाशस्य शास्त्रपरिप्राप्ततया भोगनाश्यतावच्छेदकसङ्कोचेनाविरोधादित्यादिकमूह्यम्। केचित्तु समाप्तेरेव मङ्गलाचरणफलत्ववादिमते विघ्नस्य विघातः संसर्गाभावः स विद्यते यस्य प्रयोज्यतया इत्यर्थे मत्वर्थीयाच्प्रत्ययेन विघ्नविघातपदमेव समाप्तिरूपं फलमाचष्टे, तस्मै प्रयोजनाय इत्यर्थः। विस्तरस्तु तन्त्रान्तरेषु द्रष्टव्यः।

ननु ईश्वरनमस्कार एव विघ्नविघातं प्रति वा तद्द्वारा समाप्तिं प्रति वा कारणं, न तु तन्निबन्धनमपि इत्यत आह शिष्याणां शिक्षार्थमिति। तथाहि शिष्या अपि ग्रन्थारम्भे एवमेव स्वेष्टदेवताप्रणतिं यथा कुर्य्युः, निबन्धनमन्तरेण कथमत्र ते विज्ञा भवेयुरिति भावः।

प्रवृत्त्यङ्गमिति—प्रवृत्तिप्रयोजकमित्यर्थः। तदुक्तं 'सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते। शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः।' इति।

ईश्वरप्रणामादन्विति—शिष्टा हि गुरुतमगुरुतरगुरुक्रमेणैव प्रणमन्तीति अत एव आदौ ईश्वरं नमस्कृत्य अनन्तरं कणादनमस्कारः कृत इति भावः।

यतः सच्छिष्या इत्यादि—एतदपि शिष्यशिक्षायै;—तदुक्तमाचार्य्येण 'एवं हि शिक्षिते शिष्या अपि तथा कुर्य्युस्तथा च अविच्छिन्नसम्प्रदायवीर्य्यवत्तरं शास्त्रं स्या'दिति।

पदार्थानामित्यादि—भावेत्यनेन अभावस्यापि स्वमते न तुच्छत्वमिति सूच्यते, विस्तरस्तु यथावसरं प्रतिपादयिष्यते। पदार्थधर्म्मसंग्रह इति व्यधिकरणबहुव्रीहिः शिष्टप्रयोगात् समीचीनो मन्तव्यः। केचित्तु संगृह्यन्ते संक्षेपेण अभिधीयन्ते अनेनेति व्युत्पत्त्या संग्रहः संक्षेपेण अभिधायको ग्रन्थः पदार्थधर्म्माणां संग्रहः पदार्थधर्म्मसंग्रह इति षष्ठीतत्पुरुषसमासात् साधुरिति वदन्ति।

भाष्यनामेति—अत्र भाष्यशब्दो न पारिभाषिकार्थकः प्रकृते "सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुसारिभिः। स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः" ॥ इति तल्लक्षणाननुगमात्, किन्तु यौगिक एव। इत्थञ्च पदार्थधर्म्मसंग्रहग्रन्थस्य प्रकर्षकथनावसरे 'वैशद्यं लघुत्वं कृत्स्नत्वञ्च प्रकर्षः। सूत्रेषु वैशद्याभावात् भाष्यस्य च विस्तरत्वात् प्रकरणादीनाञ्च एकदेशत्वात्' इति किरणावल्यामाचार्य्यवचनमपि सङ्गच्छते। परे कथञ्चिदेव भाष्यलक्षणं योजयन्ति।

कार्य्यमात्रस्येत्यादि:—एतेन क्षिति: सकर्त्तृका कार्य्यत्वादित्याद्यनुमानेन ईश्वरस्य सिद्धि: सूचिता भवति। अत एव नास्तिकविप्रतिपत्तयो निरस्ता:। परे तु हेतुमित्यस्य प्रकृतवैशेषिकशास्त्रहेतुमित्यर्थ:। अत एव भाष्यकारेण अन्ते 'योगाचारविभूत्या यस्तोषयित्वा महेश्वरम्। चक्रे वैशेषिकं शास्त्रं तस्मै कणभुजे नम:'॥ इति स्वयमेव स्पष्टमुपपादितम् इत्याहु:।

जीवत्वेनेत्यादि:—जीवत्वस्य विप्रलम्भकत्वव्यापकत्वमभिप्रेत्य। प्रागेवेति सुतरामेवेत्यर्थ:। न आस्था नादर: न यथार्थज्ञानजनकताधीरिति यावत्। सिद्धान्ते न जीवत्वमात्रं विप्रलम्भकताव्यापकं मुक्त्यन्यफलनिरपेक्षे जीवे व्यभिचारादिति भाव:।

प्रवृत्त्यर्थमिति - प्रयोजनस्यापि प्रवृत्त्यर्थता व्याख्याता। फलवत्तां प्रयोजकत्वसम्बन्धेन फलविशिष्टताम्। तत्‌त्वञ्च इति नि:श्रेयसहेतुतयेति शेष:।

---

## ভাষ্যতাৎপর্য্য

গ্রন্থকারগণ নির্ব্বিঘ্নে নিজগ্রন্থের সমাপ্তিকামনায় গ্রন্থের আদিতে ইষ্টদেবতা ও গুরু প্রভৃতির বন্দনা করিয়া থাকেন। উক্ত বন্দনায় প্রাক্তন দুরদৃষ্ট-বিশেষ নষ্ট হইলে অভীষ্ট সিদ্ধ হইয়া থাকে। এই জন্য ভাষ্যকার প্রশস্তকরপাদাচার্য্য নিজ গ্রন্থের প্রারম্ভে সর্ব্বকর্ত্তা পরমেশ্বর ও নিজভাষ্যের মূলকর্ত্তা মহর্ষি কণাদকে নমস্কার করিয়া গ্রন্থপ্রণয়নে প্রবৃত্ত হইয়াছেন। উক্ত নমস্কারশ্লোকের অর্থ এই যে, প্রথমতঃ সর্ব্বকর্ত্তা পরমেশ্বরকে ও তৎপর মহর্ষি কণাদকে নমস্কার করিয়া তত্ত্বজ্ঞান্-জনক পদার্থধর্ম্মসংগ্রহগ্রন্থ ( অর্থাৎ যাহা দ্বারা পদার্থের সাধর্ম্ম্য ও বৈধর্ম্ম্য সংক্ষেপে জ্ঞাত হওয়া যায় তাহা ) আমি প্রকৃষ্টরূপে বলিব।

এস্থানে আলোচনা করিতে হইবে যে, ঈশ্বর সর্ব্বশ্রেষ্ঠ এই জন্য শ্রেষ্ঠ ব্যক্তি প্রথম প্রণামার্হ বলিয়া প্রথমতঃ ঈশ্বর ও পরে তদপেক্ষা নিকৃষ্ট মহর্ষি কণাদকে নমস্কার করা হইয়াছে।

এই শ্লোকদ্বারা গ্রন্থের অভিধেয় সম্বন্ধ প্রভৃতিও দেখান হইয়াছে, এই গ্রন্থের অভিধেয় বা প্রতিপাদ্য পদার্থের সাধর্ম্ম্য ও বৈধর্ম্ম্য, প্রয়োজন মহান্ উদয় অর্থাৎ মোক্ষজনক তত্ত্বজ্ঞান। পদার্থধর্ম্মরূপ প্রতিপাদ্যের সহিত তৎপ্রতিপাদক এই গ্রন্থের প্রতিপাদ্যপ্রতিপাদকভাবরূপ সম্বন্ধ। প্রয়োজন ও তত্ত্বজ্ঞানের পরস্পর প্রযোজ্য-প্রযোজকভাব সম্বন্ধ।

যিনি সর্ব্বকর্ত্তা, তিনি পরিতুষ্ট হইয়া যে নির্ব্বিঘ্নে গ্রন্থেরও নিষ্পত্তি করিবেন, ইহাতে আর আশ্চর্য্য কি, এই জন্যই ঈশ্বরকে হেতুবিশেষণে বিশেষিত করা হইয়াছে। ইহা দ্বারা জগতের কারণরূপে ঈশ্বরের সিদ্ধিও করা হইল।

কণাদ ঋষি মুনি অর্থাৎ মননশীল, তাহার মুক্তিভিন্ন অন্য কোনও কাম্যবস্তু নাই, যে কাম্যবস্তুর লাভের জন্য তিনি পরকে ব্যর্থ উপদেশে প্রতারণা করিবেন, অতএব তাহার বাক্যে অনাস্থা করিবার কারণ নাই, ইহাই বুঝাইবার জন্য কণাদকে মুনিবিশেষণে বিশেষিত করা হইয়াছে।

---

## प्रशस्तपादभाष्यम्

द्रव्यगुणकर्म्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्म्यवैधर्म्म्याभ्यां तत्त्वज्ञानं निःश्रेयसहेतुः। तच्चे-श्वर-(१) नोदनाभिव्यक्ताद्धर्म्मादेव।

[ अथातो धर्म्मं व्याख्यास्यामः। १अ—१आ—१सू। यतोऽभ्युदयनिःश्रेयस-सिद्धिः स धर्म्मः। १अ—१आ—२सू। तद्वचनादाम्नायस्य प्रामाण्यम्। १अ—१आ—३सू। धर्म्मविशेषप्रसूताद् द्रव्यगुणकर्म्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्म्यवैधर्म्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्। १—१आ—४सू। इत्यालम्बनसूत्राणि ]

---

## जगदीशसूक्तिः

ननु तत्त्वज्ञानस्य निष्फलत्वात्तदर्थं ग्रन्थे प्रवृत्तिरनुपपन्नेत्यत आह द्रव्यगुणेत्यादि। निःश्रेयसहेतुरिति—तथा च दुःखाभावत्वेनेष्टाया मुक्तेः साधनत्वेन दृष्टस्य तत्त्वज्ञानस्य साधने ग्रन्थे प्रवृत्तिर्नानुपपन्नेति भावः।

ननु संसारिणां (२) सर्व्वेषामेव ग्रन्थवाक्यादितो द्रव्यादिपदार्थानां

(१) चोदना (ख) पु॑।

(२) नन्वासंसारं (ख) पु॑।

साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानमुत्पन्नं, न तु कस्यापि मुक्तिवार्त्तेति तत्त्वज्ञानस्य मुक्तिहेतुत्वे मानाभाव इत्यत आह तच्चेति। तत् निःश्रेयसं एवकारोऽप्यर्थे, तथा च ईश्वरनोदनया (३) वेदेनाभिव्यक्तात् प्रतिपादितात् आत्मधर्म्मिकश्रवणमननाद्यात्मकधर्म्मादपि निःश्रेयसमित्यर्थः। पदार्थतत्त्वज्ञानसत्त्वेऽपि श्रवणमननाद्यात्मकसहकार्य्यसत्त्वादेव न सर्वेषां निःश्रेयसं वृत्तमिति भावः।

## सूक्तिदीपिका

द्रव्येत्यादिग्रन्थभूमिकामारचयति नन्वित्यादिना। दुःखाभावत्वेनेत्यादिः—दुःखाभावत्वप्रकारकज्ञानजन्येच्छाविषयीभूताया इत्यर्थः। मुक्तेरिति दुःखात्यन्तप्रध्वंसरूपाया इत्यर्थः। सर्व्वेषामिति—'सर्व्वं शुक्ला सरस्वती'त्यादाविव सर्व्वशब्दस्य प्रकृते सङ्कोचवृत्तितया सर्व्वपदेन ग्रन्थाधीतिप्रभृतीनामेव परिग्रहः, न तु संसारित्वव्यापकयावत्त्वावच्छिन्नानां, स्तनन्धयादिषु ग्रन्थवाक्यादितो निरुक्ततत्त्वज्ञानासम्भवेन प्रकृतार्थवाधात्। 'तत्त्वं ब्रह्मणि याथार्थ्ये' इति कोषात् तत्त्वं याथार्थ्यम् अनारोपितं स्वरूपमिति यावत्। तस्य ज्ञानं तत्त्वज्ञानमिति। साधर्म्यवैधर्म्याभ्यामिति स्वानुवृत्तस्वेतरव्यावृत्तधर्म्माभ्यामित्यर्थः। यदा तावदत्यन्तासङ्कीर्णाः स्थाखादयः साक्षात्क्रियमाणा अपि वक्रकोटरादिभिर्धर्म्मै रेव पुरुषादिभ्यो विविच्यन्ते, नान्यथा, तदा का कथा पुनरतीन्द्रियाणां मिथः सङ्कीर्णानां कालाकाशादीनामिति भावः। साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानमित्यत्र साधर्म्यवैधर्म्यतत्त्वज्ञानमिति पाठे तु 'साधर्म्यवैधर्म्ये एव तत्त्वं तस्य ज्ञानमिति व्युत्पत्तिरनुसन्धेया। यस्य वस्तुनो यो भावस्तत् तस्य तत्त्वम्। साधारणो धर्म्मः साधर्म्यम्, असाधारणो धर्म्मो वैधर्म्य'मिति श्रीधराचार्य्याः।

ईश्वरनोदनयेति—'आत्मा वा रे द्रष्टव्यः श्रोतव्यो मन्तव्य' इत्यादिना श्रुतिवाक्येन इत्यर्थः। न्यायकन्दलीकृतस्तु ईश्वरनोदना ईश्वरेच्छाविशेषः तदभिव्यक्तात् ईश्वरेच्छाविशेषेण कार्य्यारम्भाभिमुखीकृतात् धर्म्मादित्यर्थं व्याचक्षते। तथाहि धर्म्मस्यापि न तावत् निःश्रेयसोपधानं, यावदीश्वरेच्छया नानुग्रह इति भावः।

---

(३) प्रन्यादिती (ख) पुं।

निरुक्तं तत्त्वज्ञानं हि नोपपत्त्या न वा शब्देन जनितं निःश्रेयसकारि, प्रत्यक्षात्मकमिथ्याज्ञानसमुन्मूलनद्वारा एव तस्य तथात्वस्य वक्तव्यत्वेन प्रकृते तदसम्भवात्, परोक्षज्ञानेन प्रत्यक्षात्मकदिग्भ्रमादेः प्रतिबन्धादर्शनात्, परोक्ष-तत्त्वज्ञानस्यापरोक्षमिथ्याज्ञाननिराकरणसामर्थ्यशून्यत्वस्य सिद्धान्तितत्वात्। किन्तु बलवत्तरमपरोक्षमेव तत्तथा, तत्र च वेदोक्तश्रवणमननादीनि यथोत्तर-मुपयुज्यन्ते।

अथ किमिति समुत्पादविनाशादिविचारे वस्तूनां प्रागभावप्रध्वंसाभावयोः साधर्म्यवैधर्म्यविचारे च भेदात्यन्ताभावयोः सिद्धौ भावाः षड़ेव पदार्थाः समुद्दिश्यन्ते, लाघवानुरोधेन सतोऽप्यभावस्य समुद्देशप्रकरणे अनुपग्रहे किमिति द्रव्याद्येकमात्रमेव न समुद्दिष्टमिति चेदत्र प्राचीनाः ;—अभावः स्वरूपवानपि तज्ज्ञानस्य भावात्मकप्रतियोगिज्ञानपरतन्त्रतया न पृथक् समुद्दिष्टः। तथाहि 'अभावप्रत्ययो हि विशिष्टवैशिष्ट्यमर्य्यादां नातिशेते' इति नियमेन अभाव-ज्ञानमात्रस्यैव प्रतियोगितावच्छेदकविशिष्टप्रतियोगिवैशिष्ट्यावगाहितया तादृशज्ञाने च विशेषणतावच्छेदकप्रकारकविशेषणज्ञानस्य कारणतायाः सिद्धत्वेन भावात्मकप्रतियोगिज्ञानमन्तरेण अभावज्ञानं नोपपद्यत इति भावः। अत एव किरणावल्यां 'अभावस्तु स्वरूपवानपि पृथक् नोद्दिष्टः प्रतियोगि-निरूपणाधीननिरूपणत्वात्, न तु तुच्छत्वा'दित्युदयनाचार्य्याः प्राहुः। वैशे-षिकमतानुगतनव्यग्रन्थेषु पुनरभावस्यापि पृथक्तया निर्द्देशस्तत एव नास-ङ्गतः प्रतिभाति, तस्य प्रतियोगिनिरूपणाधीननिरूपणत्वेऽपि पृथक्पदार्थताया अपलपितुमशक्यत्वात्। एतेन द्रव्यादिसप्तपदार्थवादो न षोड़शपदार्थसिद्धि-मभ्युपगच्छतां नैयायिकानां, नापि षट्पदार्थसिद्धिमभ्युपगच्छतां वैशेषिकाणां परमन्यादृश एवायमिति वदन्तो निरस्ताः, सप्तपदार्थवादस्यापि अभावसिद्धि-मुपादाय वैशेषिकनयान्तर्गतत्वादिति।

एवकार इत्यादि—धर्म्मादेवेत्यत्र एवकारस्य इतरव्यवच्छेदार्थत्वे 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इत्यादिश्रुतिविरोधः, अतः अप्यर्थं इति। स्वपक्षे तु धर्म्मस्य परम्परया मुक्त्युपयोगित्वात् न श्रुत्यर्थबाध इति भावः।

## ভাষ্যতাৎপর্য্য

যে বস্তুদ্বারা কোনও উপকার হইবে এরূপ জ্ঞান হয় নাই, তাহা লাভ করিবার জন্য কাহারও প্রবৃত্তি হয় না, এই জন্যই শাস্ত্রে ইষ্টসাধনতাজ্ঞানকে প্রবৃত্তির কারণ বলা হইয়াছে। অতএব প্রথমতঃ বুঝিতে হইবে যে, যে তত্ত্বজ্ঞান লাভ করিবার জন্য লোক প্রবৃত্ত হইবে, তাহাতে কোনও উত্তম ফল আছে কি না। এই জন্য শাস্ত্রকার প্রথমতই বুঝাইয়া দিতেছেন যে, দ্রব্য গুণ কর্ম্ম সামান্য বিশেষ ও সমবায় এই পদার্থসমূহের সাধর্ম্ম্য ও বৈধর্ম্ম্য দ্বারা যথার্থ স্বরূপজ্ঞান নিষ্ফল নহে, ঐ জ্ঞান সকল ফলের উৎকৃষ্ট মোক্ষফল দান করিয়া থাকে। উক্ত তত্ত্বজ্ঞান আবার ঈশ্বরের উপদেশরূপ বেদদ্বারা প্রতিপাদিত ধর্ম্মের সাহায্যও অপেক্ষা করে। অর্থাৎ প্রথমতঃ শাস্ত্রদ্বারা পদার্থতত্ত্বে জ্ঞান লাভ করিয়া পরে শ্রুতি-স্মৃতি ও ইতিহাস-পুরাণাদি শাস্ত্রে উপদিষ্ট যোগবিধি দ্বারা দীর্ঘকাল আগ্রহের সহিত নিবৃত্তিলক্ষণ ধর্ম্মের সেবা করিলে তত্ত্বজ্ঞান উৎপন্ন হইয়া থাকে। জগদীশের তর্কামৃতগ্রন্থে দেখিতে পাওয়া যায় যে, পরমাত্ম-সাক্ষাৎকার অর্থাৎ পরমেশ্বরে যোগজশক্তিবশতঃ ইতর পদার্থের ভেদজ্ঞান মুক্তির কারণ। পরমাত্মাতে ইতরভেদের জ্ঞান হইতে গেলে আবার ইতরের জ্ঞান থাকা আবশ্যক, কারণ প্রতিযোগী ইতরের জ্ঞান না থাকিলে ইতরভেদরূপ অভাবের জ্ঞান অসম্ভব, অতএব মুক্তির প্রতি সকল পদার্থের তত্ত্বজ্ঞানই হেতু হইয়া থাকে। বস্তুতঃ ইহা অনুভবসিদ্ধ যে, যাহা হইতে যাহার ভেদ বুঝিতে হইবে, তাহার প্রকৃত তত্ত্ব না বুঝিলে উক্ত ভেদজ্ঞান হইতে পারে না। যে ব্যক্তি বৃক্ষের স্বরূপ জানে না, তাহার পক্ষে অপর পদার্থে বৃক্ষের ভেদজ্ঞান কখনও হইতে দেখা যায় না। যখন তাহার বৃক্ষের স্বরূপ জ্ঞান হইল, তখনই সে বুঝিতে পারে যে ইহা বৃক্ষ বা ইহা বৃক্ষ নহে। অতএব পরমাত্মায় ইতর পদার্থের ভেদজ্ঞান ইতর পদার্থের জ্ঞানকে অপেক্ষা করে, ইহাই সিদ্ধান্ত। এইরূপ যে কোনও অভাব পদার্থের ভাববস্তু জ্ঞান ব্যতীত স্বতন্ত্র জ্ঞান অসম্ভব বলিয়া কণাদ অভাব পদার্থকে আর অতিবিক্তরূপে উল্লেখ না করিয়া ছয়টী ভাব-পদার্থকেই পদার্থ বলিয়া স্থির করিয়াছেন। বাস্তবিক অভাব পদার্থও তন্মতে অসৎ নহে। তবেই অভাব পদার্থ আদান করিয়া কণাদ মতকে সপ্তপদার্থবাদ ও অভাব পরিত্যাগ করিয়া কণাদমতকে ষট্‌পদার্থবাদ বলিয়া স্থির করা যায়। কেহ

কেহ আশঙ্কা করেন যে, গ্রন্থবাক্যাদি হইতে দ্রব্যাদি পদার্থের সাধর্ম্ম্য ও বৈধর্ম্ম্য দ্বারা তত্ত্বজ্ঞান হইলেও যখন মুক্তি হয় না দেখিতে পাই, তখন উক্ত তত্ত্বজ্ঞান মুক্তির হেতু ইহা কিরূপে নির্ণয় করা যায়? ইহার উত্তর এই যে, কেবল গ্রন্থবাক্যাদি জন্য তত্ত্বজ্ঞান মুক্তির কারণ নহে, শাস্ত্রোক্ত মনন প্রভৃতিও তাহার সহকারী। অতএব মননাদি না থাকাতেই সেই সেই স্থলে মুক্তি হয় না। কিন্তু যে স্থলে ঐ সহকারী থাকে, সেই স্থলে মুক্তি অবশ্যই হইয়া থাকে।

---

### प्रशस्तपादभाष्यम्

**अथ के द्रव्यादयः पदार्थाः, किञ्च तेषां साधर्म्म्यं वैधर्म्म्य-(१) ञ्चेति। तत्र द्रव्याणि पृथिव्यप्तेजो-वाय्वाकाशकालदिगात्ममनांसि सामान्यविशेष-संज्ञोक्तानि नवैव, तद्व्यतिरेकेण संज्ञान्तरान-भिधानात्। (२)**

[ पृथिव्यापस्तेजो वायुराकाशं कालो दिगात्मा मन इति द्रव्याणि—१अ—१आ—५सूत्रमालम्बनम्। ]

---

## जगदीशसूक्तिः

अथेति द्रव्यगुणाद्याः के कतिविधाः? तेन द्रव्यगुणेत्यादि-प्रागुक्तवाक्यादेव द्रव्यगुणादेरवगमात्तेषु प्रश्नासम्भवेऽपि न क्षतिः। तेषां पदार्थानां साधर्म्म्यं अनुगतो धर्म्मः, वैधर्म्म्यं इतरव्यावृत्तो धर्म्मः।

---

(१) वैधर्म्म्येति पाठः (ग) पुस्तके नास्ति।

(२) अन्यस्य संज्ञानभिधानात् (ख) पुस्तके।

उत्तरं तत्रेति। तत्र द्रव्यादिषु मध्ये। सामान्यविशेषसंज्ञयोक्तानि विभक्तानि पृथिव्यादीनि (१) नवैव द्रव्याणीति योजना। द्रव्यत्वं यत् सामान्यं तदवान्तरधर्म्मेण या संज्ञा पृथिवीजलेत्यादिका तया उक्तानि पृथिव्यादीनि नवैव द्रव्याणीति तदर्थः। सामान्यविशेषसंज्ञयेत्यस्य जातिविशेषप्रवृत्तिनिमित्तकसंज्ञयेत्यर्थस्तु न युक्तः कालदिगादिसंज्ञायाः पारिभाषिकत्वेन जात्यवच्छिन्नशक्तिमत्त्वाभावात्।

ननु तमसोऽप्यतिरिक्तद्रव्यस्य सत्त्वात् पृथिव्यादीनि नवैव द्रव्याणीति व्याहतमत आह तद्व्यतिरेकेणेति। पृथिव्यादिसंज्ञाव्यतिरेकेण मुनिना संज्ञान्तरेण द्रव्यस्याविभजनादित्यर्थः। तथाच पृथिव्यादिभिन्नं तमो न द्रव्यं, किन्तु महाप्रभात्वावच्छिन्नात्यन्ताभावः, तत्रैव च नीलाद्यारोपरूपा नीलं तमश्चलतीति प्रतीतिरित्याचार्य्याः। बाधकं विना उक्तप्रतीतेर्भ्रमत्वायोगान्नीलरूपवत्त्वेन तमः पृथिव्येव तस्य चालोकाभावव्यङ्ग्यत्वान्न प्रकाशे प्रत्यक्षमिति तु कन्दलीकृतः।

---

## सूक्तिदीपिका

ननु तद्विषयकज्ञानस्य तद्विषयकजिज्ञासाप्रतिबन्धकतया द्रव्यगुणेत्यादिग्रन्थेनैव द्रव्यादिविज्ञानस्य समुत्पादात् कथं द्रव्यादिजिज्ञासेत्यत आह के कतिविधा इति। तथाहि द्रव्येत्यादिग्रन्थेन द्रव्यादिस्वरूपग्रहे सत्यपि विभाजकसंख्यायाः प्रत्येकं ततोऽनवगतेः प्रश्नोपपत्तिरिति भावः। इत्यश्च सूत्रे संख्याप्रश्नाभावात् नवैवेत्यादिना संख्यानिरुक्तिरनुपपन्नेत्यपि निरस्तम्। विशेषाणामानन्त्यात् समवायस्य च एकत्वात् तत्र न विभागजिज्ञासेति ध्येयम्।

साधर्म्यवैधर्म्यजिज्ञासयैव लक्षणप्रश्नस्य गतार्थत्वात् के इत्यस्य कतिविधा इत्यर्थ इति परे।

तदवान्तरधर्म्मेणेति—तन्न्यूनवृत्तिपृथिवीत्वादिधर्म्मेण इत्यर्थः। तदवान्तरधर्म्मप्रकारकबोधजनिकेति निष्कर्षे संज्ञाविशेषणमिदम् पृथिव्यादि-

(१) विभक्तानीति पाठो बहुषु आदर्शेषु नास्ति।

संज्ञायाः पृथिवीत्वाद्यवच्छिन्नबोधकत्वादिति। विभक्तानीति—सामान्यधर्म्मेण द्रव्यत्वेनावच्छिन्नानां परस्परविरुद्धतद्व्याप्यपृथिवीत्वादिधर्म्मैः प्रतिपादनाया विषयीभूतानीति तदर्थः। नवैवेति नवविधानीत्यर्थः। एतेन उद्देश्यतावच्छेदक-समनियतवस्तुमदन्यसंख्यया विधार्थत्वान्न न्यूनाधिकसंख्याशङ्केति भावः। एवशब्दस्य इतरव्यवच्छेदार्थत्वेन तद्विशेषस्य लाभः।

पारिभाषिकत्वेनेति उभयावृत्तिधर्म्मावच्छिन्नसङ्केतवत्त्वरूपलक्षणवत्त्वे-नेत्यर्थः। अतएव जगदीशः 'उभयावृत्तिधर्म्मेण संज्ञा स्यात् पारि-भाषिकी'ति। 'जात्यवच्छिन्नसङ्केतवती नैमित्तिकी मता' इति च प्राह शब्दशक्तिप्रकाशिकायाम्।

कालेत्यादि—कालत्वदिक्त्वादीनां धर्म्माणां प्रत्येकमेकव्यक्तिमात्रवृत्तितया जातित्वबाधेन कालत्वाद्यवच्छिन्नप्रतिपादककालादिसंज्ञाया न सामान्य-विशेषावच्छिन्नप्रवृत्तिनिमित्तकत्वमिति भावः। अत एव तर्कामृते 'आकाशत्व-कालत्वदिक्त्वानि उपाधयः, अन्यानि जातयः।' इत्युक्तं जगदीशेन। प्रवृत्तिनिमित्तत्वञ्च वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितिप्रकारत्व मिति व्यक्तं शक्तिवादे। अत एव कालादिसंज्ञाया अपि द्रव्यत्वाश्रय-बोधकत्वेन न जातिविशेषप्रवृत्तिनिमित्तकत्वशङ्केति ध्येयम्।

तमसोऽप्यतिरिक्तद्रव्यस्येति—तथाहि तमो न रूपि द्रव्यं रूपवतो द्रव्यस्य स्पर्शाव्यभिचारात् स्पर्शवतश्च महतः प्रतीघातधर्म्मतया तमसि सञ्चरतां प्रतीघातापत्तेः। किञ्च रूपवतः प्रत्यक्षस्य आलोकसहकारमन्तरेणा-सम्भवात् तमसश्च आलोकप्रभाविरहदशायामेव प्रत्यक्षस्य अनुभवसिद्धत्वात्। अपि च तमो न पृथिवी गन्धवत्त्वाभावात्, न जलं शुक्लरूपाद्ययोगात्, न तेजःसमीरौ स्पर्शाभावात्, न व्योमादिचतुष्क अविभुत्वात्, नापि मनो दृश्यत्वात्। तदेवं पृथिव्यादिसंज्ञया संख्यातेषु नवस्वनन्तर्भावात् दशमद्रव्यत्वं तमसः। द्रव्यत्वन्तु नीलरूपवत्त्वात् क्रियावत्त्वाच्च प्रसिध्यति द्रव्यभिन्नानां गुणादीनां निर्गुणक्रियत्वादिति। तदुक्तं 'तमः खलु चलं नीलं परापर-विभागवत्। प्रसिद्धद्रव्यवैधर्म्म्यान्नवभ्यो भेत्तुमर्हति।" इति भावः।

मुनिनेत्यादि—तथाहि यदि एतन्नवातिरिक्तमपि द्रव्यं स्यात्, तदा सर्व्वज्ञेन निःशेषपदार्थोपदेशप्रवृत्तेन मुनिना तदपि उपादिश्यत इति भावः।

महाप्रमेत्यादि—प्रभांशे महत्त्वञ्च स्वपरप्रकाशकत्वं, स्वप्रकाशकत्वे सति

परप्रकाशकत्वमिति यावत्। तैजसेन्द्रियचक्षुरवच्छेदेन तमःसत्त्वानुपपत्ति-वारणाय सत्यन्तम्। खद्योतप्रभावच्छेदेन तदनुपपत्तिवारणाय विशेष्य-दलम्। न च तथापि मार्जारचक्षुषः स्वपरप्रकाशकत्वानपायात् तदवच्छेदेन तमसः सत्त्वमनुपपन्नमिति वाच्यम् तत्र गोलकस्य प्रकाशात् तस्य चाप्रका-शकत्वात् तद्भिन्नत्वेनापि तेजसो विशेषणीयत्वात् सिद्धान्तमुक्तावल्या दिन-करीयव्याख्याने आवश्यकतेजोऽभावेनैवोपपत्तावित्यस्य प्रकृष्टमहत्त्वोद्भूता-नभिभूतरूपवत्तेजस्त्वावच्छिन्नाभावेनैवोपपत्तावित्यर्थः कृतः। तत्र तेजस्त्रसरेणुक-सत्त्वेऽपि तमसः प्रत्ययात् महत्त्वे प्रकृष्टत्वविशेषणम्। चक्षुरादितेजःसत्त्वेऽपि तत्प्रत्ययात् उद्भूतेति रूपविशेषणम्। सुवर्णादिसत्त्वेऽपि तथात्वेन अनभि-भूतेति। आलोकवत्यपि तेजोविशेषाभावमादाय अतिप्रसङ्गवारणाय तादृश-तेजस्त्वावच्छिन्नप्रतियोगिताकाभावमेवार्थमाहुः। तत्र तु गतिः पूर्ववदेव चिन्त्या।

न च विनिगमनाविरहेण तमोरूपं द्रव्यान्तरमङ्गीकृत्य तेज एव किं तदभावो नेष्यत इति वाच्यम् उष्णस्पर्शसमवायिकारणतया तेजसो द्रव्यान्तरस्य सिद्धौ तदभावतयैव तमसः सिद्धेः, अत एव आवश्यकतेजः-सामान्याभावस्तम इति नव्याः। ये तु आलोकाभावे आरोपितं नीलं रूपं तम इति वदन्ति, तेषामपि न युक्तः पक्षः नीलं तम इति प्रतीते-रुभयोरंशयोरेव नीलविषयतया तथारोपस्यासम्भवात् ज्ञानगर्भस्वरूपस्य चाक्षुषत्वानुपपत्तेश्च।

उक्तप्रतीतेरिति नीलं तमश्चलतीति प्रतीतेः। भ्रमत्वायोगात् तदभाववति तत्प्रकारकज्ञानत्वासम्बन्धात्। नीलरूपवत्त्वेनेति तमसः पृथिवीत्वे हेतुः पृथिवीभिन्ने नीलरूपवत्त्वाभावादिति भावः। नीलरूपवत्त्वे निरुक्त-प्रतीतेर्भ्रमत्वायोगो हेतुः, यत्र यद्विषयकप्रतीतिः न भ्रमः, तत्र तद्वत्त्वमिति व्याप्तेः।

---

### ভাষ্যতাৎপর্য্য

দ্রব্যাদি পদার্থের সাধর্ম্ম্য ও বৈধর্ম্ম্যহেতুক তত্ত্বজ্ঞান মোক্ষের হেতু বলা হইয়াছে, সম্প্রতি দ্রব্যাদি পদার্থ কি কি তাহা বুঝাইবার জন্য বলিতেছেন যে, পৃথিবী জল তেজ বায়ু আকাশ কাল দিক্ আত্মা ও মন এই নয় প্রকার দ্রব্য;

উহার সামান্য ও বিশেষ সংজ্ঞা উক্ত আছে। সামান্য সংজ্ঞা দ্রব্য ও বিশেষ সংজ্ঞা পৃথিবী ইত্যাদি।

এ স্থলে আশঙ্কা এই যে, কেহ কেহ অন্ধকারকে অতিরিক্ত দ্রব্য বলিয়া স্বীকার করেন, কারণ অন্ধকার এক স্থান হইতে অপর স্থানে চলিয়া যায়, অতএব উহার ক্রিয়া আছে, প্রত্যক্ষতঃ উহার কৃষ্ণ রূপ দেখা যায়, অতএব গুণও আছে এবং অন্ধকারে সংখ্যা পৃথক্ত্ব পরিমাণ সংযোগ ও বিভাগাদিরও সত্তা রহিয়াছে, কিন্তু গুণ ও ক্রিয়া কখনও দ্রব্যাভিন্নে থাকিতে পারে না, এই হেতু অন্ধকারও একটী দ্রব্য। পৃথিবী হইলে তাহাতে গন্ধ, জল হইলে তাহাতে অভাস্বর শুক্লরূপ ও মাধুর্য্যরস প্রভৃতি, তেজ হইলে তাহাতে ভাস্বর শুক্লরূপ ও উষ্ণস্পর্শ প্রভৃতি, বায়ু হইলে তাহাতে অনুষ্ণাশীতস্পর্শ ও রূপাভাব প্রভৃতি থাকিতে হয়। এবং বায়ু অপ্রত্যক্ষ দ্রব্য, অন্ধকারের যখন প্রত্যক্ষ অনুভব সিদ্ধ, তখন কোনও রূপেই উহা বায়ু বলিয়া স্বীকার করা চলে না। আকাশ কাল দিক্ ও আত্মার স্বরূপও উহাকে বলা যায় না, কারণ আকাশাদি চতুষ্টয় বিভু ও রূপশূন্য, অন্ধকার বিভিন্ন বিভিন্ন প্রদেশে খণ্ড খণ্ড রূপে থাকে বলিয়া উহার মূর্ত্ততা বা পরিচ্ছিন্নপরিমাণ প্রত্যক্ষসিদ্ধ হইয়া থাকে এবং নীল রূপের আশ্রয় বলিয়াই উহার প্রতীতি হয়। মন নীরূপ ও পরমাণুপরিমাণ, উহা কখনও চক্ষুরিন্দ্রিয়ের গ্রাহ্য হইতে পারে না। অন্ধকার কিন্তু চক্ষুরিন্দ্রিয়ের বিষয় বলিয়া সকলের নিকটই সিদ্ধ, অতএব উহা মন বলিয়াও স্বীকার করা অসম্ভব, এই জন্যই উহাকে অতিরিক্ত দশম দ্রব্য বলিতে হইবে। অথচ কণাদ ঋষি ও প্রশস্তপাদাচার্য্য কেবল নয় প্রকারই দ্রব্য বলিয়া দশম দ্রব্য স্বীকার করেন নাই, ইহার সমাধান কি? এস্থলে এই বলিতে হইবে যে, অন্ধকার অতিরিক্ত দ্রব্য নহে, উহা মহাপ্রভার অভাব মাত্র। উক্ত অভাব পদার্থে নীলরূপ ও চলন ক্রিয়ার আরোপ হইয়া থাকে। অভাব পদার্থ যে বৈশেষিক মতে অসিদ্ধ নহে, তাহা পূর্ব্বেই ব্যক্ত করা হইয়াছে। উষ্ণস্পর্শের সমবায়িকারণরূপে প্রথমতঃ তেজের সিদ্ধি হইলে তাহার অভাব বলিয়া অন্ধকারের স্বরূপনির্ণয়ে বিনিগমনা বা একপক্ষপাতিনী যুক্তিরও অসদ্ভাব নাই। তাহা না হইলে যেমন অন্ধকারকে তেজোদ্রব্যের অভাব বলা হয়, ঐ রূপ তেজকেও অন্ধকার দ্রব্যের অভাব বলা যাইত ইত্যাদি। এই জন্যই মুনি নব দ্রব্যের অতিরিক্ত কোনও দ্রব্যের সংজ্ঞা করেন নাই।

---

प्रशस्तपादभाष्यम्

गुणा (१) रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्व-संयोगविभागपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्ना-श्चेति कण्ठोक्ताः सप्तदश। चशब्दसमुच्चिताश्च गुरुत्व-द्रवत्वस्नेहसंस्कारादृष्टशब्दाः सप्तैवेत्येवं चतुर्विंशति-र्गुणाः।

[ रूपरसगन्धस्पर्शाः संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणाः १ अ—१ आ—६ सूत्रमालम्बनम्। ]

---

## जगदीशसूक्तिः

गुणाः कतिविधा इत्यत्रोत्तरं गुणा इत्यादि। गुणाः सप्तदश रूपरसाद्याः कण्ठोक्ताः स्वयमेव मुनिना (२) रूपत्वरसत्वाद्यवान्तर-धर्म्मेण विभक्ताः रूपरसगन्धस्पर्शाः संख्याः परिमाणानि पृथक्त्वं संयोग-विभागौ परत्वापरत्वबुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणा इति सूत्रेण सप्तदशानां स्वयमेव कणादैर्विभजनादिति भावः। गुरुत्वादे-रविभजनात् मुन्युक्तविभागस्य न्यूनत्वमपाकर्त्तुमाह (३) चशब्देति। प्रयत्नाश्च गुणा इत्युक्तसूत्रस्थ-चशब्दसमुच्चिताश्चेत्यर्थः।

अत्र (४) अनुगतस्य अदृष्टत्वस्य मिथ्याज्ञानवासनादिजन्यताव-च्छेदकतया सिद्धस्य सत्त्वेऽपि अदृष्टपदं धर्म्मत्वाधर्म्मत्वाभ्यामेव विभिन्न-

(१) गुणाश्च (ख) पुस्तके।

(२) स्वयमेव मुनिनेति पाठः (ख) पुस्तके।

(३) न्यूनत्वमपाकुर्व्वन्नाह (ख) पुस्तके।

(४) तत्रेति (ख) पुस्तके।

रूपाभ्यां धर्म्माधर्म्म-तात्पर्य्यकम् अतो न गुरुत्वादेः सप्तत्वविरोधः, गुणत्व-साक्षाद्व्याप्यजातिभिर्गुणानां (१) विभाज्यत्वनियमे प्रमाणाभावात्, अन्यथा वेगस्थितिस्थापकभावनासु अनुगतसंस्कारत्वजातेर्निष्प्रमाण-कत्वात् वेगत्वादिभिरेव गुणत्वसाक्षाद्व्याप्यजातिभिर्विभजने गुणानां षड्विंशतित्वापत्तेः। इत्येवमिति कण्ठोक्तेः (२) सप्तदशभिश्चशब्द-(३) समुच्चितानां सप्तानां मिलनेनेत्यर्थः।

---

## सूक्तिदीपिका

रूपादिचतुर्व्विंशतिगुणसाधारणं गुणत्वं नाम सामान्यं, तदेव च गुण-शब्दोल्लेखिप्रतीतिविषया लक्षणं गुणानां, तेन तद्धर्म्मावान्तरधर्म्मप्रकारक-ज्ञानगोचरेच्छां प्रति तद्धर्म्मज्ञानस्य कारणतया प्रकृते गुणत्वरूपसामान्य-धर्म्मज्ञानमन्तरेण विशेषजिज्ञासाया असम्भवेन विभागानुपपत्तिदोषो निरस्तः। एवं द्रव्यादिविभागोऽप्युपपादयितव्य इत्यवधेयम्। सकलगुण-साधारणगुणत्वजातिसिद्धिश्च लैङ्गिकी, तत्प्रयोगप्रकारो यथा, द्रव्यकर्म्मभिन्न-सामान्यवद्वृत्तिकारणता किञ्चिद्धर्म्मावच्छिन्ना कारणतात्वात् दण्डादिनिष्ठघट-कारणतावत् इति धर्म्मस्य जातित्वे लाघवमिति लाघवज्ञानसहकाराच्च तस्य जातित्वमायातमिति भावः।

रूपन्वेत्यादि—रूपत्वरसत्वादिरूपगुणत्वव्याप्यधर्म्मेणेत्यर्थः। न्यूनत्वमिति तदकथनज्ञानज्ञाप्यतदज्ञानवत्पुरुषोच्चरितत्वम् इत्यर्थः। तथाहि मुनिना कणादेन चशब्दप्रयोगादेव शेषाणां सप्तानां विनिर्द्दिष्टत्वान्न न्यूनत्वमिति भावः।

मिथ्याज्ञानेत्यादि—अत्र आदिपदेन कर्म्मादीनामुपग्रहः। तथाहि मिथ्याज्ञानवासनात्वेन अदृष्टत्वेन कर्म्मत्वेन अदृष्टत्वेन च क्लृप्तकार्य्यकारणभावे अदृष्टत्वस्य जन्यतावच्छेदकता सिद्ध्यति। तथाहि मिथ्याज्ञानवासनादिनिरू-

---

(१) जात्यैव गुणानां विभागात् नियमे (ख) पुस्तके।

(२) कण्ठोक्तेति (क) पुस्तके।

(३) चकारेति (ख) (ग) पुस्तकयोः। सहेति (ग) पुस्तके अधिकम्।

পিতা অদৃষ্টবৃত্তিজন্যতা কিঞ্চিদ্ধর্ম্মাবচ্ছিন্না কার্য্যতাত্বাৎ তস্য ধর্ম্মস্য জাতিত্বে লাঘবমিতি লাঘবজ্ঞানসহকারেণ চ তস্য জাতিত্বমায়াতি। পরে তু নিরুক্ত-কার্য্যকারণভাবে প্রমাণবিরহেণ নাদৃষ্টত্বস্য জাতিত্বসিদ্ধিঃ, অত এব কিরণাবল্যাম্ 'নত্বদৃষ্টত্বং নাম সামান্যমস্তি, কার্য্যকারণলক্ষণানাং তদ্ব্যবস্থাপকানামভাবা'দিত্যুদয়নাচার্য্যাঃ প্রাহুঃ।

গুণত্বসাক্ষাদ্ব্যাপ্যেতি—গুণত্বব্যাপ্যান্যাপ্যত্বে সতি গুণত্বব্যাপ্যত্বং তদর্থঃ। বেগত্বাদিভিরেবেতি—ইদঞ্চ সত্যন্তদলঘটকীভূতস্য প্রথমব্যাপ্যত্বস্য সমবায়সম্বন্ধাবচ্ছিন্নত্বমভিপ্রেত্য, অন্যথা সংস্কারত্বস্যাপি গুণত্বব্যাপ্যতয়া তদ্ব্যাপ্যবেগত্বাদেঃ গুণত্বসাক্ষাদ্ব্যাপ্যত্বং জগদীশোক্তমনুপপন্নং স্যাদিতি। গুণত্বব্যাপ্যজাত্যব্যাপ্যত্বং বা সত্যন্তদলে প্রবেশ্যম্, অতো ন ক্ষতিঃ।

নিষ্প্রমাণকত্বাদিতি—অদৃষ্টত্বজাতাবিব কার্য্যকারণভাবলক্ষণমূল-কানুমানাদিরূপপ্রমাণশূন্যত্বাদিত্যর্থঃ। প্রত্যক্ষস্য তু সুতরামসম্ভবোঽযোগ্য-ত্বাৎ। শব্দাদীনামপি পৃথক্প্রমাণত্বানভ্যুপগমাচ্চ।

তদত্রায়ং নিষ্কর্ষো যথা, অদৃষ্টত্বস্য নিরুক্তরীত্যা জাতিত্বেঽপি গুণত্ব-সাক্ষাদ্ব্যাপ্যজাতিভিরেব গুণানাং বিভাগনিয়মাভাবেন ধর্ম্মত্বাধর্ম্মত্বা-ভ্যামপি বিভাগস্য নির্দ্দোষতয়া সংস্কারত্বস্য বেগাদিত্রিতয়ানুগতজাতিত্ব-বিরহেঽপি তেন রূপেণ বেগাদীনাং বিভাগেনৈব চ ন মুন্যভিপ্রেত-নব্যানিরুক্তচতু-র্বিংশতিসংখ্যাকত্বস্য গুণেষু ব্যাঘাত ইতি।

---

## ভাষ্যতাৎপর্য্য

কণাদ মুনি নিজ সূত্রে রূপ, রস, গন্ধ, স্পর্শ, সংখ্যা, পরিমাণ, পৃথক্ত্ব, সংযোগ, বিভাগ, পরত্ব, অপরত্ব, বুদ্ধি, সুখ, দুঃখ, ইচ্ছা, দ্বেষ ও প্রযত্ন, এই সপ্তদশটী পদা-র্থকে নামতঃ গুণ বলিয়া উল্লেখ করিয়াছেন এবং 'প্রযত্নাশ্চ' এই চ শব্দ দ্বারা গুরুত্ব দ্রবত্ব, স্নেহ, সংস্কার, অদৃষ্ট, অর্থাৎ ধর্ম্ম ও অধর্ম্ম, এবং শব্দ, এই সাতটী গুণ বলিয়া প্রতিপাদন করিয়া সমষ্টিতে চতুর্ব্বিংশতি গুণ বলিয়াছেন। প্রকৃত স্থলে অদৃষ্টপদে ধর্ম্ম ও অধর্ম্ম। উক্ত ধর্ম্ম ও অধর্ম্মরূপে দ্বিবিধ অদৃষ্ট না লইলে প্রাচীনসম্মত গুণের চতুর্ব্বিংশতি সংখ্যা পূরণ হয় না। অদৃষ্টত্বের জাতিত্বমতে অদৃষ্টত্ব গুণত্ব-

সাক্ষাদ্ব্যাপ্য জাতি হইলেও গুণত্বসাক্ষাদ্ব্যাপ্য জাতি দ্বারাই গুণের বিভাগ করিতে হইবে এরূপ যুক্তি তর্কাদি না থাকায় ধর্ম্মত্ব ও অধর্ম্মত্বরূপে অদৃষ্টের বিভাগ দোষাবহ নহে, তাহা না হইলে বেগাদি ত্রিবিধ সংস্কারে সংস্কারত্ব অনুগত জাতি না থাকায় বেগত্ব প্রভৃতি ধর্ম্মত্রয়ই গুণত্বসাক্ষাদ্ব্যাপ্য জাতি হয়, অতএব তদ্রূপে বিভাগ করিলে গুণ ষড়্বিংশতিসংখ্যক হইয়া পড়ে। ইত্যাদি।

---

## प्रशस्तपादभाष्यम्

**उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्चैव कर्म्माणि। गमनग्रहणात् भ्रमणरेचनस्यन्दनोर्द्ध्व-ज्वलनतिर्य्यक्पतननमनोन्नमनादयो गमनविशेषा एव, न तु जात्यन्तराणि।**

[ उत्क्षेपणमपक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्म्माणि। १ अ— १ आ—७ सूत्रमालम्बनम् ]।

---

## जगदीशसूक्तिः

कर्म्माणि कतिविधानीत्यत्र उत्तरयति उत्क्षेपणेत्यादिना। ननु भ्रमणादेरपि कर्म्मान्तरस्य सत्त्वात् पञ्चैवेति विभागो व्याहत इत्यत आह गमनग्रहणादिति। न तु जात्यन्तराणीति न तु गमनाद्वृत्ति-जातिमन्तीत्यर्थः।

---

## सूक्तिदीपिका

चलतीत्यनुगतप्रतीतिसिद्धा हि कर्म्मत्वजातिः सकलकर्म्मसाधारणी। एवमुत्क्षेपणत्वादिजातिरपि तद्व्याप्या।

गमनग्रहणादिति—ननु भ्रमणादीनां गमनविशेषत्वेन गमनपदेन लाभवत् उत्क्षेपणादीनामपि गतिविशेषतया गमनपदेनैव लाभसम्भवे कथमुत्क्षेप-

णादीनां पृथगुपादानं सङ्गच्छत इति चेन्न उत्क्षेपणादयो हि न गतिविशेषाः, किन्तु गतिविशेषानुकूलव्यापारविशेषा एव ; तथाहि लोष्टमुत्क्षिपतीत्यादौ ऊर्द्ध्वदेशसंयोगानुकूलव्यापारानुकूलचेतनव्यापारादय उत्क्षिपत्यादेरर्थाः, गतिस्तु संयोगविशेषानुकूलव्यापारविशेषरूपा। भ्रमणादयोऽपि तत्स्वरूपा एवेति भ्रमणादीनां ततो लाभेऽपि नोत्क्षेपणादेस्ततः संग्रह इति नोत्क्षेपणादीनां पृथगुपादानं दुष्यतीति भावः। तदुक्तं कारिकावलीव्याख्याने रामरुद्रीये—'उत्क्षिपतीति व्यवहारो हि चेतनेष्वेवानुभूयते, नत्वचेतने लोष्टादौ, तस्मात् लोष्टादिनिष्ठगत्यनुकूलचेतनव्यापार एव उत्पूर्व्वक्षिपधातोरर्थः' इति।

केचित्तु ऊर्द्ध्वं गच्छति अधोगच्छतीत्यादिप्रतीत्या उत्क्षेपणादौ गमनत्वस्य आनुभविकत्वेऽपि स्वतन्त्रेच्छस्य मुनेः पर्य्यनुयोगानर्हतया उत्क्षेपणादीनां गमनात् पृथगुपादानं नासमञ्जसम्। तदुक्तं सिद्धान्तमुक्तावलीव्याख्याने दिनकरीये—'स्वतन्त्रेच्छस्य मुनेर्नियोगपर्य्यनुयोगानर्हत्वादिति' वदन्ति।

उत्क्षेपणत्वापक्षेपणत्वयोर्विषमक्षेपणत्वव्याप्यतया उत्क्षेपणापक्षेपणपदाभ्यां विषमक्षेपणस्य कर्म्मत्वोपपत्तावपि समक्षेपणस्य कर्म्मत्वोपपत्तिश्चिन्त्या।

तदेतेषां कर्म्मणां विहितयागस्नानदानादिषु धर्म्मानुकूलप्रयत्नवदात्मसंयोगजन्यत्वं निषिद्धदेशगमनहिंसाकलञ्जभक्षणादिषु च अधर्म्मानुकूलप्रयत्नवदात्मसंयोगजन्यत्वमध्यवसेयमिति वैशेषिकसूत्रोपस्कारकारा व्याचक्षते।

ननु गमनस्य कर्म्मपर्य्यायतया कर्म्मसामान्येष्वेव गच्छतीति प्रयोगस्य दृष्टत्वेन कर्म्मवृत्तिजातिमात्रैरेव गमनत्वस्य विरोधाभावात् कथं सामान्यधर्म्मावच्छिन्नानां परस्परविरुद्धतद्व्याप्यधर्म्मप्रकारेण धर्म्मिप्रतिपादनरूपो विभागः प्रकृते सङ्गच्छते उत्क्षेपणत्वादीनां चतसृणामेव जातीनां परस्परविरुद्धतया चतुर्धैव विभागस्य सम्भवादिति चेन्न विभिन्नबुद्धिव्यपदेशभाजाम् भ्रमणरेचनादीनामेकेन शब्देन संग्रहार्थमेव गमनस्य पृथगभिधानात्। अथवा गमनत्वमिदं न कर्म्मत्वव्यापिका जातिः, किन्तु कर्म्मत्वव्याप्या पञ्चमी जातिः, सा च न कर्म्मसामान्यवृत्तिः, परं उत्क्षेपणादिचतुष्टयभिन्नवृत्तिरेव, अतो नोक्तदोषः। यश्च कर्म्मसामान्य एव गच्छतीति व्यवहारः, स तु गौण एव,

भ्रमणादिष्वेव तत्प्रयोगस्य मुख्यत्वात्। निष्क्रमणत्वप्रवेशनत्वादिकन्तु परस्परं साङ्कर्य्यान्न जातिरिति।

अत एव निष्क्रमणत्वप्रवेशनत्वादिका तु न जातिः, एकस्मिन्नेव कर्म्मणि गृहाद् गृहान्तरं गच्छति पुरुषे कस्यचिद् द्रष्टुः प्रविशतीति प्रत्ययः, कस्यचित्तु निष्क्रामतीति, तत्र जातिसङ्करः स्यात्। तथा भ्रमणादेरेकस्या जलप्रणाल्या निष्क्रम्यापरां प्रविशति निष्क्रामति प्रविशतीति प्रत्ययद्वयदर्शनादुपाधिसामान्य-मेवतदध्यवसेयमिति शङ्करमिश्राः प्रवदन्ति।

'आकुञ्चनं नाम सत्स्वेव अवयवानामारम्भकसंयोगेषु परस्परमवयवा-नामनारम्भकसंयोगोत्पादकं वस्त्राद्यवयविकौटिल्योत्पादकं कर्म्म, यतो भवति सङ्कुचति पद्मं सङ्कुचति वस्त्रं सङ्कुचति चर्म्मेति प्रत्ययः। एवमवयवानां पूर्व्वोत्पन्नानारम्भकसंयोगविनाशकं कर्म्म प्रसारणं, यतो भवति प्रसरति वस्त्रं प्रसरति चर्म्म प्रविकसति पद्ममित्यादिप्रत्ययः' इति वैशेषिकसूत्रोपस्कारे शङ्करमिश्राः प्राहुः।

तिर्य्यक्पतनेति मूलं वक्रगमनार्थकं, न तु गुरुत्वजन्यतावच्छेदकपतनत्व-जात्यवच्छिन्नपरं नमनपदेनैव तल्लाभात् नमनोन्नमनशब्दयोः प्रकृते अधोगमनो-र्द्ध्वगमनार्थकत्वादिति ध्येयम्।

सर्व्वत्रैव कर्म्मसु गच्छतीति व्यवहारनियामको गौणमुख्यसाधारणो धर्म्मस्तु स्वाश्रयसंयोगविभागासमवायिकारणत्वमेव। तमेव धर्म्ममुपादाय तुल्यतया मुख्ये गौणे च गमने गमनत्वव्यवहार इति समासः।

---

## ভাষ্যতাৎপর্য্য

চলনপ্রতীতিতে যে কর্ম্মত্বজাতি প্রত্যক্ষত উপলব্ধ হয়, উহাই কর্ম্মের সামান্য লক্ষণ। কেহ কেহ বলেন যে, সংযোগভিন্ন হইয়া যে সংযোগের অসমবায়ি কারণ হয়, তাহাকে কর্ম্ম কহে। এ স্থলে বুঝিতে হইবে এই যে, সংযোগের অসমবায়ি কারণ কোনও স্থানে কর্ম্ম ও কোনও স্থানে সংযোগ হইয়া থাকে, অন্য কোনও পদার্থ সংযোগের অসমবায়ি কারণ হয় না; অতএব সংযোগকে বাদ দিয়া সংযোগের অসমবায়ি কারণ বলিতে একমাত্র কর্ম্মকেই পাওয়া যাইবে। বস্তুতঃ কর্ম্মত্বজাতিরূপ

লঘুধর্ম্মের কর্ম্মলক্ষণত্ব সম্ভবসত্ত্বে উক্ত গুরুতর লক্ষণ করা ন্যায্য নহে; এই জন্য পূর্ব্বকল্পই উত্তম।

উক্ত কর্ম্ম উৎক্ষেপণ অপক্ষেপণ আকুঞ্চন প্রসারণ গমন এই পাঁচ প্রকার। ভ্রমণ রেচন স্পন্দন উর্দ্ধজ্বলন বক্রগমন নমন ও উন্নমন এই পঞ্চপদার্থ গতিবিশেষ বলিয়া গমন পদদ্বারাই উহার লাভ হওয়ায় আর উহা অতিরিক্তরূপে নির্দ্দেশ করা হয় নাই।

এখন আশঙ্কা হয় এই যে, যেমন ভ্রমণ রেচন প্রভৃতি পদার্থ গতিবিশেষ বলিয়া উহার পৃথক্‌রূপে নির্দ্দেশ করা হয় নাই, ঐরূপ উৎক্ষেপণাদিও উর্দ্ধগতি প্রভৃতি-স্বরূপ বলিয়া তাহার পৃথক্ নির্দ্দেশ অসঙ্গত হয়, তাহার উত্তর এই যে, উৎক্ষেপণাদি গতিবিশেষ নহে, কিন্তু গতির অনুকূলব্যাপারবিশেষ। যেমন 'লোষ্ট্রমুৎক্ষিপতি' এই স্থলে যে লোষ্ট্রের উর্দ্ধে গতি হইতেছে, উহাই গতির আশ্রয় এবং সেই গতির অনুকূলব্যাপার হস্তচালনাদি চেতনে রহিয়াছে; উক্ত চেতনব্যাপারই উৎক্ষেপণ; উর্দ্ধে গতিমাত্র নহে। এইরূপ অপক্ষেপণ অধঃসংযোগানুকূলব্যাপারানুকূলব্যাপার। আকুঞ্চন প্রসৃতবস্তুর সঙ্কোচসাধন, উহাও সংযোগবিশেষানুকূলব্যাপারানুকূল-ব্যাপার। প্রসারণ সঙ্কুচিতবস্তুর প্রসারসাধন অর্থাৎ সংযোগবিশেষানুকূলব্যাপারানু-কূলব্যাপার। কাজেই ঐ সকল পদার্থ গমনপদে লাভ করা যায় না বলিয়াই উহার পৃথক্ উপাদান করা হইয়াছে।

কেহ কেহ বলেন যে উৎক্ষেপণ প্রভৃতি উর্দ্ধগমনাদিভিন্ন আর অতিরিক্ত কিছুই নহে, অতএব উহা গমনপদে লাভ করা যাইলেও মুনিগণ স্বতন্ত্রেচ্ছাপ্রণোদিত হইয়া বিভাগাদি করিয়া থাকেন, তাহাদের কথার উপর তদ্বিষয়ে প্রশ্ন অসঙ্গত। ইহা উত্তম উত্তর নহে. বাস্তবিক অনুভবসিদ্ধ বস্তুদ্বারা নিষ্পাদিত পূর্ব্ববর্ত্তী উত্তরই সমীচীন।

---

### प्रशस्तपादभाष्यम्

**सामान्यं द्विविधं परमपरञ्चेति। तच्च अनुवृत्ति-प्रत्ययकारणम्। तत्र परं सत्ता महाविषयत्वात्, सा**

च अनुवृत्तेरेव हेतुत्वात् सामान्यमेव। द्रव्यत्वाद्यपरमल्पविषयत्वात्। तच्च व्यावृत्तेरपि हेतुत्वात् सामान्यं सत् विशेषाख्यामपि लभते।

[सामान्यं विशेष इति बुद्ध्यपेक्षम्—१ अ—२ आ—३ सू। भावोऽनुवृत्तेरेव हेतुत्वात् सामान्यमेव—१ अ—२ आ—३ सू। द्रव्यत्वं गुणत्वं कर्म्मत्वञ्च सामान्यानि विशेषाश्च—१ अ—२ आ—५ सूत्राणि आलम्बनानि।]

---

## जगदीशसूक्तिः

सामान्यं कतिविधमित्यत्रोत्तरयति सामान्यमिति। द्विविधे (१) दर्शयति परमपरञ्चेति (२) ननु व्यक्तिभिन्नस्य सामान्यस्य अलीकत्वात् तद्विभागोऽनुपपन्न इत्यत आह तच्चेति। अनुगतप्रत्ययोऽनुगतबुद्धिः कारणं युक्तिर्यंत्र(३) तादृशम्। तथाच व्यक्तिभिर्नानाधर्म्मिकानुगतबुद्ध्यसम्भवात् तन्निर्व्वाहकमवश्यं सामान्यमुपेयम्। यद्वा (४) ननु लक्षणतः सामान्यरूपेणावगतस्यैव विशेषतो विभागौचित्यात् प्रथमतः सामान्यस्य विभागोऽनुचित इत्यत आह तच्चेति। अनुवृत्तिप्रत्ययकारणं(५) नानाधर्म्मिण्येकप्रकारकप्रमाप्रकारीभूतो धर्म्मः (६) सामान्यमिति तदर्थः।

प्रकारत्वञ्च समवायेन ग्राह्यम्, अतोऽभावत्वादेरखण्डत्वेऽपि न तत्रातिव्याप्तिः। अभावत्वादिकमपि सामान्यमेव। जातित्वं पुनस्तस्य

(१) द्वैविध्यं (ख) पुस्तके।

(२) परमपरमिति (ख) पुस्तके।

(३) तत्कारणं युक्तिर्यत्र (ख) पुस्तके।

(४) यद्वेति पाठः (ख) पुस्तके नास्ति।

(५) अनुवृत्तिप्रत्ययकारणम् इति पाठः (ख) पुस्तके नास्ति।

(६) यो धर्म्मः सः इति (ख) पुस्तके पाठः।

नास्ति समवेतसामान्यस्यैव जातित्वादित्यपि केचित् (७)। तत्र परापरसामान्ययोर्मध्ये। महेति-महान् सकलसामान्याश्रयः विषय आश्रयो यस्य तत्त्वादित्यर्थः।

ननु द्रव्यत्वादिरिव सत्तापि सामान्यविशेषतया (८) कथं न व्यवह्रियत इत्यत आह सा चेति। सा सत्ता अनुवृत्तेरनुगतबुद्धेरेव हेतुत्वात् सामान्यमेव सामान्यपदाभिलप्यमानैव, न तु सामान्यविशेषपदाभिलप्यमाना। स्वानाश्रयसामान्यवद्व्यावृत्तत्वप्रयोजकस्य (९) सामान्यविशेषत्वादिति सम्प्रदायः।

वस्तुतो ननु (१०) घटः सन्नित्यादिप्रतीतेर्वर्त्तमानत्व(११)रूपसत्तावगाहित्वेनैवोपपत्तेः सत्तारूप(१२)सामान्ये प्रमाणाभाव इत्यत आह सा चेति। अनुवृत्तेरिति भावो भूतो वर्त्तमानश्च सर्व्व एव घटः सन्, न तु सदन्य (१३) इत्याकारकानुगतप्रतीतेर्हेतुत्वात् नियामकत्वात् सामान्यमेव, (१४) न तु वर्त्तमानत्वरूपा भाविन्यतीते वा वर्त्तमानत्वबाधेन तादृशप्रतीतेर्भ्रमत्वापातादिति तु नव्याः।

द्रव्यत्वादीति—सामान्यमित्यनुषज्यते। अल्पेति—अल्पः विषयः आश्रयो यस्य तत्त्वात् सामान्यवन्निष्ठाभावप्रतियोगिसामान्यत्वादिति यावत्।

ननु द्रव्यत्वं जातिविशेष इत्यादिकः कथं व्यवहारः सामान्यत्व-

(७) कश्चित् इति (ख) पुस्तके।

(८) विशेषात्मतया इति (ख) पुस्तके।

(९) स्वानाश्रयसामान्यवद्व्यावृत्तिप्रयोजकेति (ख) पुस्तके।

(१०) ननु इति पाठः (ख) पुस्तके नास्ति।

(११) वर्त्तमानत्वादि इति (ख) पुस्तके।

(१२) सत्तारूपेति (ख) पुस्तके।

(१३) असन् इति (ख) पुस्तके।

(१४) सामान्यवत्त्वादिति (ख) पुस्तके।

विशेषत्वयोर्मिथोविरोधादत आह तच्चेति। तत् द्रव्यत्वादि। (१५) व्यावृत्तेः स्वानाश्रयसामान्यवद्व्यावृत्तत्वबुद्धेः हेतुत्वात् जनकत्वात्। विशेषाख्यां विशेषसंज्ञां लभते, न तु नित्यद्रव्यवृत्त्यन्त्यविशेषत्वमित्यर्थः।

---

## सूक्तिदीपिका

सामान्यमिति—समानानां भावः स्वाभाविकोऽनागन्तुको वस्तूनां धर्म्मः सामान्यमिति किरणावली। अत्र धर्म्मत्वं वृत्तित्वं, तच्च समवायसम्बन्धावच्छिन्नमिति नित्यत्वे सति अनेकसमवेतत्वं जातित्वमिति लक्षणं परिप्राप्तं भवति। अत एव शङ्करमिश्रा अपि 'नित्यमनेकव्यक्तिवृत्ति सामान्यं नित्यत्वे सति स्वाश्रयान्योन्याभावसमानाधिकरणं वा।' इति प्राहुरुपस्कारे। संयोगविभागयोरनेकसमवेतत्वसत्त्वादतिव्याप्तिवारणाय सत्यन्तम् ध्वंसाप्रतियोगित्वे सति प्रागभावाप्रतियोगित्वसमानाधिकरणार्थकम्। वस्तुतस्तु प्रकृतलक्षणे नित्यत्वं ध्वंसाप्रतियोगित्वं प्रागभावाप्रतियोगित्वं वा वाच्यम् विशेषणान्तरनिवार्य्यप्रागभावध्वंसान्यतरातिव्याप्तेः समवेतत्वदलेनैव वारयितुं शक्यत्वात्। नित्यत्वे सति समवेतत्वं गगनपरिमाणादीनामप्यस्ति अतोऽनेकेति। नित्यत्वे सति अनेकवृत्तित्वं घटात्यन्ताभावादीनामप्यस्ति अतः वृत्तित्वसामान्यं विहाय समवेतत्वमिति। ननु अनेकत्वं एकभिन्नत्वं तच्च द्रव्यादावसम्भवि एकत्वस्य तत्र सर्व्वत्र सत्त्वादिति चेन्न अनेकपदेन समवेतत्वे भेदविशिष्टत्वस्य विवक्षितत्वात्। वैशिष्ट्यञ्च स्वानुयोगिनिरूपितत्व-स्वप्रतियोगिनिरूपितत्वोभयसम्बन्धेन। अनेकवृत्तित्वञ्च स्वाश्रयान्योन्याभावसामानाधिकरण्यमिति किरणावलीप्रकाशे वर्द्धमानोपाध्यायाः।

अनुवृत्तिप्रत्ययकारणमिति—तथाहि नह्यनुगतं धर्म्ममन्तरेण विभिन्नव्यक्तीनामनुगतप्रतीतेः सम्भव इत्यनुगतप्रतीतिरेव सामान्यसाधिकेति भावः। न च लवणघोटकादिनानाविभिन्नजातीयानामपि सैन्धवादिशब्दवाच्यत्वेनैव तत्र तत्र घटादिशब्दवाच्यत्वेनैव अनुगतप्रतीतिरास्तामिति किं वा तदर्थं

---

(१५) तद्व्यावृत्तेरिति (ख) पुस्तके।

सामान्याङ्गीकारेणेति वाच्यम् वाच्यतावच्छेदकतया सुतरामेव जातेरभ्युपगन्तव्यत्वात् अनधिगतशब्दशक्तीनामपि सर्व्वघट गोचर तुल्याकारप्रतीतिदर्शनाच्चेत्यादिकमूह्यम्।

परमपरञ्चेतीति—परत्वमधिकदेशवृत्तित्वं व्यापकत्वमिति यावत्। तच्च यदपेक्षया परत्वं स्वभिन्नत्वे सति तद्वन्निष्ठात्यन्ताभावप्रतियोगित्वम्। स्वस्मिन् स्वापेक्षया परत्ववारणाय स्वभिन्नत्वे सतीति सत्यन्तम्। अधिकदेशवृत्तित्वमिति यथाश्रुतार्थस्मरणे तु स्वव्यभिचारित्वे सति व्यापकत्वमिति वाच्यम्; तेन स्वस्य स्वव्यभिचारित्वाभावात् नातिप्रसङ्गः। ईदृशार्थानुसरणे तु 'एकव्यक्तिसमावेशे सती'ति किरणावलीसूचितं सामानाधिकरण्यविशेषणमप्यनुपादेयम्, विरुद्धजात्योर्न्यूनातिरिक्तवृत्तित्वस्थल एव अतिप्रसङ्गवारणाय तदुपादानस्य कर्त्तव्यतया प्रकृतव्यापकत्वविरहादेव तद्वारणस्य शक्यसाधनत्वात्। अपरत्वमल्पदेशवृत्तित्वं व्याप्यत्वमिति यावत्। तच्च स्वभिन्नत्वे सति स्वाभाववदवृत्तित्वम्। स्वस्मिन् स्वापेक्षया अपरत्ववारणाय सत्यन्तम्। अल्पदेशवृत्तित्वमिति यथाश्रुतार्थरक्षापक्षपातिनस्तु स्वाधिकरणवृत्तित्वे सति स्वाधिकरणवृत्त्यभावप्रतियोगित्वमित्यर्थमाहुः। विरुद्धजात्योरन्योन्यं परत्वापरत्ववारणाय सत्यन्तम्। अत एव किरणावल्यामुदयनाचार्य्याः 'परं व्यापकमपरं व्याप्यमित्यर्थ' इत्याहुः।

लक्षणत इत्यादि—एतच्च तद्धर्म्मावान्तरधर्म्मप्रकारकज्ञानगोचरेच्छारूपजिज्ञासायां लक्षणतस्तद्धर्म्मप्रत्ययस्य हेतुतामभ्युपगम्य। अत एव सव्यभिचारादौ 'लक्षणतः सामान्यमप्रतीतवतो विशेषजिज्ञासानुदया'दित्यादिग्रन्थोक्तिरुपलभ्यते।

फलानुसन्धानेन प्राञ्चः षट् जातिबाधकान् कल्पयन्ति,—यथा—

"व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः।
रूपहानिरसम्बन्धो जातिबाधकसङ्ग्रहः।" इति।

अत एव किरणावल्यां—'नैकव्यक्तिकं सामान्यमस्तीति आकाशादौ वक्ष्यते। नान्यूनानतिरिक्तव्यक्तिकमिति' इत्यादि श्रीमदुदयनाचार्य्याः प्राहुः। अस्य विशेषतो विस्तरस्तु अस्मत्कृतजातिबाधकविचारप्रकरणे समनुसन्धेयः; अत्र ग्रन्थगौरवभयादेव तस्य नोपादानमिति। संक्षेपतस्तु

व्यक्तेरभेदः स्वाश्रयैकमात्रव्यक्तिकत्वं ; तच्च गगनत्वादेर्जातित्वे बाधकम्। तुल्यत्वं तुल्यव्यक्तिवृत्तिकत्वं स्वभिन्नजातिसमनियतत्वमिति यावत्। तच्च घटत्वकलशत्वयोरुभयोर्जातित्वबाधकम्. तथाहि तयोरेकतरमेव सामान्यं न तु द्वयमिति भावः। सांकर्य्यं परस्पराभावसामानाधिकरण्ये सति सामानाधिकरण्यं, तच्च भूतत्वमूर्त्तत्वादीनां परस्परं जातित्वबाधकम्। अनवस्थितिरनवस्था, सा च जातीनां जातिमत्त्वे बाधिका। रूपहानिः स्वतोव्यावर्त्तकत्वादिरूपलक्षणहानिः विशेषाणां जातिमत्त्वे बाधिका। तथाहि सामान्याश्रयस्य सामान्यरूपेणैव व्यावर्त्तकताया नियमात् विशेषाणां जातिमत्त्वे न स्वतोव्यावर्त्तकत्वसम्भव इति भावः। असम्बन्धस्तु समवायाभावः। स च समवायादीनां जातित्वबाधक इति। समवायेनेति—तृतीयार्थोऽवच्छिन्नत्वं ; तच्च प्रकारतानिरूपकत्वरूपप्रकारकत्वैकदेशप्रकारतान्वयि, तेन समवायसम्बन्धावच्छिन्नप्रकारताकमित्यर्थः।

न तत्रातिव्याप्तिरिति—अभावत्वप्रकारकाभावविशेष्यकप्रमाप्रकारतायाः स्वरूपसम्बन्धेनैव प्रमानिरूपिततया समवायसम्बन्धावच्छिन्नत्वविरहात्। प्रमापदस्यापि समवायसम्बन्धेन अभावत्वप्रकारकभ्रममादाय व्यावृत्तिर्बोध्या। एकगगनधर्म्मिकगगनपरिमाणादिप्रकारकप्रमाप्रकारीभूतगगनपरिमाणाद्यतिप्रसङ्गवारणाय धर्म्मांशे नानेति। नानाधर्म्मिकनानाप्रकारकसमूहालम्बनमुपादाय तथैवातिप्रसङ्गवारणाय प्रकारांशे एकेति। भेदविशिष्टविशेष्यतानिरूपितभेदविशिष्टान्यप्रमीयसमवायसम्बन्धावच्छिन्नप्रकारत्वाश्रयो धर्म्म इति निष्कृष्टार्थः। वैशिष्ट्यञ्च स्वप्रतियोगिवृत्तित्व-स्वानुयोगिवृत्तित्वैतदुभयसम्बन्धेन।

सकलेति—साकल्यम् आश्रये विशेषणम्, नतु सामान्ये, यावतां सामान्यानामेकस्याश्रयस्याप्रसिद्धेः।

स्वानाश्रयेत्यादि—अत्र स्वपदं सामान्यविशेषत्वेनाभिमतपरम्, तथाहि सत्तायाः सकलसामान्याश्रयवृत्तित्वात् स्वानाश्रयो न कश्चित् सामान्यवान् यतो व्यावृत्तिबुद्धिजनकतया सापि सामान्यविशेषः स्यादिति। द्रव्यत्वादेस्तु गुणत्वादिसामान्याश्रयावृत्तित्वेन स्वानाश्रयः सामान्यवान् गुणादिरेव ततो व्यावृत्तत्वधीजनकतया द्रव्यत्वादिकं सामान्यमिव विशेषोऽपि इति भावः।

ন তু নিত্যেত্যাদি— তথাহি প্রকৃতবিশেষণত্বং স্বানাশ্রয়সামান্যবদ্বৃত্ত্যা বৃত্ততা-ধীজনকত্বমেব, নতু নিত্যদ্রব্যবৃত্ত্যন্ত্যবিশেষত্বম্, অত এব তাদৃশবিশেষস্য দ্রব্যত্বাদ্যাবত্ত্বেঽপি নাসঙ্গতিঃ।

---

## ভাষ্যতাৎপর্য্য

কোনও কোনও ধর্ম্মের দ্বারা পদার্থের অনুগতরূপে প্রতীতি হইয়া থাকে, যেমন দ্রব্য বলিলে দ্রব্যত্বরূপে সকল দ্রব্যের বা গুণ বলিলে গুণত্বরূপে সকল গুণের প্রতীতি হয়। এইরূপ আবার অভাব বলিলে অভাবত্বরূপে সকল অভাবের বা ভেদ বলিলে ভেদত্বরূপে সকল ভেদের প্রতীতি হইয়া থাকে। উক্ত অনুগত প্রতীতির হেতু কতিপয় ধর্ম্ম উপাধিনামে ও কতিপয় ধর্ম্ম জাতি নামে আখ্যাত হইয়া থাকে। তন্মধ্যে জাতিনামক ধর্ম্ম নিজ আশ্রয়ে সমবায় সম্বন্ধে থাকে ও উপাধিগুলি স্বাশ্রয়ে সাধারণতঃ স্বরূপসম্বন্ধে থাকে। এবং একব্যক্তিবৃত্তি গগনত্ব প্রভৃতি ধর্ম্মকেও উপাধি বলা হইয়া থাকে, জাতিনামক ধর্ম্ম একমাত্রব্যক্তি-বৃত্তি হয় না। এই সকল অনুসন্ধান করিয়া প্রাচীন দার্শনিকগণ জাতির এই লক্ষণ বলিয়া থাকেন, যথা—যে ধর্ম্ম স্বয়ং নিত্য অর্থাৎ ধ্বংসপ্রাগভাবশূন্য এবং বহু ব্যক্তিতে সমবায় সম্বন্ধে বর্ত্তমান থাকে, তাহাকে জাতি কহে।

সংযোগ ও বিভাগ প্রভৃতি অনেকে সমবেত হইলেও উহা নিত্য নহে। গগনপরিমাণাদি নিত্য ও সমবেত হইলেও অনেকে সমবেত নহে। অত্যন্তাভাবাদি নিত্য ও অনেকবৃত্তি হইলেও সমবায় সম্বন্ধে বৃত্তি নহে। এই জন্যই সংযোগ বিভাগ প্রভৃতিতে জাতিলক্ষণের অতিব্যাপ্তি হইল না। উক্ত জাতির সিদ্ধি অনুগত প্রতীতিমূলক, অর্থাৎ যদি ঐরূপ বহুবস্তুগত সামান্য ধর্ম্ম কল্পিত না হয়, তবে পূর্ব্বোক্ত অনুগত প্রতীতি অসম্ভব হইয়া উঠে। কেবল মাত্র ব্যক্তি স্বীকার করিলে প্রতি ব্যক্তির পরস্পর ভেদ থাকায় কোনও রূপে নানা ধর্ম্মীতে একাকার অনুগত প্রতীতি হইতে পারে না। অতএব ব্যক্তির আশ্রিত জাতিও স্বীকার করিতে হয়। নানা ধর্ম্মীতে যে ধর্ম্মের সমবায় সম্বন্ধে প্রমাজ্ঞান হয়, উহাই সামান্য ইহাই জগদীশের মত। এ স্থলে সামান্য পদের অর্থ জাতি হইলে নিত্য বিশেষণও দিতে হইবে; তাহা না হইলে সংযোগ ও বিভাগে অতিব্যাপ্তি হয়। অভাবত্বাদির

সমবায় সম্বন্ধে প্রমাজ্ঞান হয় না বলিয়াই উহা সামান্য নহে। কেহ বলেন যে অভাবত্বাদি সামান্য বটে অর্থাৎ অনুগত প্রতীতির কারণ বটে, কিন্তু উহা জাতি নহে, এই মতে সামান্যলক্ষণে সমবায় সম্বন্ধে প্রমাজ্ঞান বলিবার প্রয়োজন নাই। উক্ত সামান্য দুই প্রকার পর ও অপর। সকল সামান্যাশ্রয়ে যাহার বর্ত্তমানতা আছে, উহাই পর সামান্য। উহা কেবল অনুবৃত্তি বা অনুগত প্রতীতির হেতু বলিয়া কেবল সামান্য। দ্রব্যত্বাদি অপর সামান্য, কারণ উহা সকল সামান্যাশ্রয়ে থাকে না। দ্রব্যত্ব গুণে থাকে না বা গুণত্ব দ্রব্যে থাকে না। কর্ম্মত্ব দ্রব্যাদিতে থাকে না। অতএব দ্রব্যত্বাদি জাতির আশ্রয় সত্তা জাতির আশ্রয় অপেক্ষা অল্প। উহা যেমন অনুগত প্রতীতির হেতু বলিয়া সামান্য ঐরূপ ব্যাবৃত্তিবুদ্ধির হেতু বলিয়া বিশেষ সংজ্ঞায়ও অভিহিত হইয়া থাকে। যে জাতির অভাবাশ্রয়ে অপর কোনও জাতি আছে এবং উহা উক্ত অভাবাশ্রয় হইতে ব্যাবৃত্তি বুদ্ধির হেতু, তাহাই সামান্য অথচ বিশেষ। এই বিশেষপদ উক্ত অর্থেই ব্যবহৃত হইয়াছে। নিত্যদ্রব্যবৃত্তি অন্ত্য বিশেষ অর্থে নহে। সত্তার অনাশ্রয় কোনও সামান্যবান্ প্রসিদ্ধ না থাকায় সত্তা কেবল সামান্য, বিশেষ নহে। দ্রব্যত্বাদির অনাশ্রয়ে গুণাদিতে গুণত্বাদি জাতি:আছে এবং উহা যেমন অনুগত প্রতীতির হেতু, ঐরূপ গুণাদি হইতে ব্যাবৃত্তিবুদ্ধিরও হেতু, এই জন্যই উহা সামান্য এবং বিশেষ।

এখন আপত্তি হইতেছে এই যে, সত্তা নামে দ্রব্য গুণ ও কর্ম্মগত একটী জাতি স্বীকার না করিয়া উহা বর্ত্তমানত্বরূপ স্বীকার করিলেই সত্তা প্রতীতির উপপত্তি হইতে পারে, তবে আর অতিরিক্ত পদার্থ স্বীকার করিতে যাইব কেন? তাহার উত্তর এই যে, যখন ভাবী ভূত ও বর্ত্তমান সর্ব্ববিধ দ্রব্যাদিতেই তুল্যরূপে সত্তার প্রতীতি হয়, তখন উহাকে কিরূপে বর্ত্তমানত্বরূপ স্বীকার করা যায়? বর্ত্তমানত্ব কেবল বর্ত্তমান পদার্থেই থাকে, ভাবী ও ভূত পদার্থে উহা থাকিতে পারে না। অথচ ভাবী ও ভূত ঘটাদিতে যে সত্তার প্রতীতি হয়, উহা ভ্রমরূপ হইয়া ওঠে। বাস্তবিক উহা শাস্ত্রসম্মত প্রমাজ্ঞানই বটে। অতএব সকল জাতি অপেক্ষা অধিকদেশবৃত্তি বা সকল জাতির ব্যাপক সত্তা নামে যে জাতি আছে, তাহা শুদ্ধ পর সামান্য। কারণ উহা কোনও জাতি অপেক্ষা অল্পদেশবৃত্তি নহে। দ্রব্যত্বাদি জাতি সত্তা জাতি অপেক্ষা যেমন অল্পদেশবৃত্তি বলিয়া অপর সামান্য, ঐরূপ ঘটত্বাদি জাতি অপেক্ষা অধিকদেশবৃত্তি বলিয়া পর সামান্য; এই জন্য পরত্ব ও অপরত্বের

একত্র সমাবেশে উহা পরাপর সামান্য। আর ঘটত্বাদি জাতি কোনও জাতি অপেক্ষা অধিকদেশবৃত্তি হয় না বলিয়া এবং দ্রব্যত্বাদি অপেক্ষা অল্পদেশবৃত্তি হয় বলিয়া উহা শুদ্ধ অপর সামান্য। এই তত্ত্ব অনুসন্ধান করিয়াই ন্যায়পঞ্চানন বিশ্বনাথ কারিকাবলী গ্রন্থে ঐরূপ নির্ণয় করিয়াছেন।

---

प्रशस्तपादभाष्यम्

**नित्यद्रव्यवृत्तयो ह्यन्त्या (१) विशेषाः। ते च खल्वत्यन्तव्यावृत्तिबुद्धिहेतुत्वाद्विशेषा एव (२)।**

[ अन्यत्र अन्त्येभ्यो विशेषेभ्यः—१अ—२आ—६ सूत्रमालम्बनम्। ]

## जगदीशसूक्तिः

विशेषत्वं यदि व्यावर्त्तकत्वमात्रं तदा सामान्यादावतिप्रसक्तिरतो विशेष(३)मभिदधान एव बहुवचनेन तदाश्रयस्यानेकविधत्वं दर्शयति नित्येति। नित्यं सर्वदा द्रव्यवृत्तयो द्रव्यसमवेता इत्यर्थः। तेन द्रव्यकर्म्मणोर्घटत्वगुणत्वादेश्च व्युदासः। तावन्मात्रञ्च (४) नित्यगुणद्रव्यत्वाद्यतिव्याप्त(५)मत उक्तम् अन्त्या इति। अन्तो विरतिः नित्यद्रव्यवृत्तिजातिगुणयोर्विच्छेद इति यावत्। तद्वदित्यर्थः। तेन सर्वदा नित्य(६)-द्रव्यसमवेतत्वे सति नित्यद्रव्यवृत्तिजातिगुणाभ्यां भिन्नत्वमेव प्रकृते विशेषत्वमिति फलितार्थः। [जातिजातिमद्भिन्नत्वे सति नित्यद्रव्य-

---

(१) ऽन्त्या इति (ख) पुस्तके।

(२) एव विशेषा इति (ग) पुस्तके।

(३) विशेषत्व-(ख) पुस्तके।

(४) तावन्मात्रं-(ख) पुस्तके।

(५) द्रव्यत्वाद्यतिप्रसक्त इति (ख) पुस्तके।

(६) नित्येति (ख) पुस्तके नास्ति

समवेतत्वं विशेषत्वमित्यपि केचित् ।] यद्वा अन्ते अन्तकाले महाप्रलये वर्त्तमाना अन्त्यास्तेन कर्म्मव्यक्तीनां व्युदासः । तन्मात्वञ्च घटत्वादौ ध्वंसे च गतमत उक्तं नित्यद्रव्यवृत्तय इति । नित्यद्रव्यमात्रसमवेता इति तदर्थः ।

नचैवं नित्यगुणेष्वात्मत्वजातौ चातिप्रसङ्गः कर्म्मवृत्तिसामान्यशून्यत्वे सति नित्यद्वयसमवेतान्यत्वेनापि विशेषणीयत्वादिति भावः ।

ननु द्रव्यत्वादिसामान्यानामिव अन्त्यविशेषाणामपि कुतो न सामान्यविशेषत्वमत आह ते च (७) खल्विति । अत्यन्तव्यावृत्ति-बुद्धिहेतुत्वात् अनुगत(८)बुद्ध्यजनकत्वे सति व्यावृत्तिबुद्धिजनकत्वात् विशेषा एव विशेषपदवाच्या (९) एव, नतु सामान्यपदवाच्या (१०) अपीत्यर्थः ।

---

## सूक्तिदीपिका

विशेषत्वमित्यादि—व्यावर्त्तकत्वमात्रम् इतरव्यवच्छेदकत्वम् इतरभेदसाधकत्वमिति यावत् । सामान्यादादित्यादि द्रव्यत्वादिजातीनामपि इतरेभ्यो द्रव्यादिव्यावर्त्तकत्वेन तल्लक्षणस्य विशेषस्य तत्रापि सत्त्वादतिव्याप्तिरिति भावः । तदाश्रयस्य विशेषाश्रयस्य अनेकविधत्वं तत्तद्विशेषाणामाश्रयिणां भिन्नतया तत्तत्पुरस्कारेणाश्रयाणामनेकप्रकारत्वमित्यर्थः । अत एव किरणावल्यां "विशेषा इति बहुवचनेनानन्त्यं विवक्षितम्" इत्युदयनाचार्य्याः । सेतु-टीकायामपि-"अत्र विशेषा इति बहुवचनेन विना बाधकमसङ्कुचितेनानन्त्यं विवक्षितम् ।" इति पद्मनाभमिश्राः प्राहुः ।

तेनेति—नित्यमित्यादिरीत्या व्याख्यानोपक्षेपेणेत्यर्थः । तथाहि द्रव्यकर्म्मणो

(७) ते च इति (ख) पुस्तके ।

(८) अनुवृत्तीति (ख) पुस्तके ।

(९) पदाभिलप्या इति (ख) पुस्तके ।

(१०) पदाभिलप्या इति (ख) पुस्तके ।

घटत्वगुणत्वादिकञ्च न नित्यं द्रव्यसमवेतानि द्रव्यकर्म्मघटत्वानां द्रव्यसमवेतत्वेऽपि सर्गादौ महाप्रलये च जन्यद्रव्यकर्म्मघटाद्यभावेन गुणत्वादेश्च गुणादाविव समवायेन द्रव्यसमवेतत्वाभावेन च निरुक्तलक्षणास्पर्शात्। तावन्मात्रमिति नित्यद्रव्यसमवेतत्वमात्रमित्यर्थः। नित्यगुणा गगनपरिमाणादयः। ते च नियतमेव द्रव्यसमवेताः स्वेषामाश्रयाणाञ्च चिरस्थिरत्वात्। द्रव्यत्वमपि गगनादिनित्यद्रव्यवृत्तितया स्वस्यापि नित्यतया नित्यद्रव्यसमवेता एवेति तावन्मात्रेण भवत्यतिव्याप्तिरिति भावः। एकद्रव्याः स्वरूपसन्त इति लक्षणमित्युदयनाचार्य्याः। तदर्थश्च "एकद्रव्या इति एकमात्रद्रव्याश्रया इत्यर्थः। स्वरूपेति स्वरूपेणैव सन्तो नतु सत्तायोगेनेत्यर्थः। निःसामान्यत्वे सति एकद्रव्यमात्रवृत्तित्वमिति लक्षणार्थः" इति किरणावलीप्रकाशे वर्द्धमानोपाध्यायाः। एतन्मते विशेषस्य जातिमत्त्वबाधिका रूपहानिरपि अन्यथैव व्याख्येया स्वतोव्यावर्त्तकत्वस्य तत्र लक्षणत्वानभ्युपगमात्। परं तस्य सामान्यवत्त्वे निःसामान्यत्वघटितलक्षणहानिरित्यर्थः।

तेन सर्व्वेत्यादि—गगनादौ अतिव्याप्तिवारणाय सत्यन्तम्। नित्यगुणद्रव्यत्वाद्यतिव्याप्तिवारणाय विशेष्यदलम्। नित्यद्रव्यवृत्तीति जातिगुणविशेषणं प्रकृतातिव्याप्तिस्थलमभिप्रेत्य, निष्कर्षे तु जातिगुणभिन्नत्वमात्रमेव निवेश्यम्। द्रव्यत्वातिव्याप्तिवारणाय जातीति। नित्यगुणातिव्याप्तिवारणाय गुणेति

जातीत्यादि—जातिभिन्नत्वे सति जातिमद्भिन्नत्वे च सति नित्यद्रव्यसमवेतत्वमित्यर्थः। द्रव्यत्वाद्यतिव्याप्तिवारणाय प्रथमसत्यन्तम्। नित्यगुणातिव्याप्तिवारणाय द्वितीयसत्यन्तम्। समवायादौ अतिव्याप्तिवारणाय विशेष्यम्। जातिभिन्नत्वं जातित्वमात्रावच्छिन्नप्रतियोगिताकभेदः जातिमद्भिन्नत्वञ्च जातित्वावच्छिन्नावच्छेदकत्वभिन्नावच्छेदकत्वानिरूपकप्रतियोगिताकभेद इत्यर्थौ वाच्यः, तेन व्यासज्यवृत्तिधर्म्मावच्छिन्नभेदादिकमादाय न द्रव्यत्वादावतिव्याप्तिस्तदवस्थेति ध्येयम्।

तन्मात्रञ्चेति—निरुक्तार्थकमन्त्यत्वम्। घटत्वादाविति—महाप्रलये घटत्वादेराश्रयविरहेऽपि तस्य नित्यतया विनाशासम्भवेन काले घटत्वादेः कालिकेन सत्त्वमभ्युपेयते, अत एव घटत्वादेरन्त्यत्वम्।

नित्यद्रव्येत्यादि—ननु कालस्य नित्यद्रव्यतया तत्र महाप्रलये घटत्वादेः सत्ताभ्युपगमेन तावतापि नातिव्याप्तिनिरास इत्यत आह नित्यद्रव्यमात्रसमवेता इति तदर्थ इति। तत्त्वञ्च नित्यद्रव्येतरासमवेतत्वे सति समवेतत्वम्। विशेषस्यापि कालिकेन नित्यद्रव्यभिन्नवृत्तित्वात् सत्यन्तदले समवायनिवेशः। अत्यन्ताभावादौ अतिप्रसङ्गवारणाय च विशेष्यदले इत्यनुसन्धेयम्। तथा च घटत्वादेः कालिकेन नित्यद्रव्यवृत्तित्वेऽपि न तस्य तत्र समवेतत्वमिति निरस्तातिव्याप्तिः।

अतिप्रसङ्ग इति—नित्यगुणानां आत्मत्वजातेश्च अन्त्यत्वे सति नित्यद्रव्यमात्रसमवेतत्वादिति भावः। कर्मेत्यादि—नित्यगुणेषु अतिव्याप्तिवारणाय सत्यन्तम्। तत्रापि अन्त्येतिदलस्य कर्मव्यक्तिव्युदासकस्य वैयर्थ्यशङ्कानिराकरणाय कर्मावृत्तीति सामान्यविशेषणम्। आत्मत्वजातावतिप्रसङ्गवारणाय नित्यद्वयसमवेतान्यत्वदलम्। तथाहि नित्यगुणानां कर्मावृत्तिगुणत्वादिजातिशून्यत्वाभावात् अनेकात्मसमवेतस्य चात्मत्वस्य जातेर्नित्यद्वयसमवेतान्यत्वासम्भवात् न क्षतिः। न च अन्त्यत्वविशेषणमुपादाय सामान्यांशे कर्मावृत्तित्वविशेषणमपि नोपादेयं। तदत्र लाघवानुरोधेन तथैव लक्षणमस्त्विति वाच्यम्, कर्मावृत्तित्वस्य प्रकृते अभावघटकतया अखण्डाभावघटकत्वेन स्वसमानाधिकरणसाध्यव्याप्यतावच्छेदकधर्मान्तरघटितत्वरूपस्य वैयर्थ्यस्य तत्र अभावात्। विशेषाभावसामान्याभावयोः प्रतियोगितावच्छेदकभेदेन भेदात् प्रकृतसामान्याभावत्वविशेषाभावत्वयोर्वैयर्थ्यलक्षणघटकसामानाधिकरण्यस्य असम्भवादित्यवदातम्।

केचित्तु अन्ते अवसाने वर्त्तत इत्यन्त्यः यदपेक्षया विशेषो नास्तीत्यर्थंकरणात् स्वतोव्यावृत्तत्वमेव विशेषलक्षणमुपक्षिपन्ति। तच्च स्वतोव्यावृत्तत्वं स्वभिन्नलिङ्गजन्यस्वविशेष्यकस्वसजातोयेतरभेदानुमित्यविषयत्वम्। साजात्यञ्च पदार्थविभाजकोपाधिरूपेण इत्याद्याहुः। लिङ्गांशे स्वभिन्नत्वनिवेशात् विशेषमात्रस्यैव स्वलिङ्गकस्वसजातीयविशेषान्तरभेदानुमितिविषयत्वेऽपि नासम्भवः। अनुमितौ स्वविशेष्यकत्वनिवेशात् 'घटो विशेषाद् भिद्यते कपालसमवेतत्वादित्याद्यनुमितेरपि स्वभिन्नलिङ्गकत्वात् विशेषप्रतियोगिकभेदविधेयकत्वाच्च तादृशानुमितिविषयतायाः स्वस्मिन् सत्त्वेन नासम्भवतादवस्थ्यम्

इत्यादिकमूह्यम्। एतन्मते अन्त्यत्वमेव विशेषलक्षणं, नित्यद्रव्यवृत्तय इति तु स्थानकथनमात्रम्; न तु लक्षणे प्रविष्टं प्रयोजनाभावात्। नव्यास्तु विशेषस्य अनवस्थाप्रसङ्गेन स्वतोव्यावर्त्तकत्वमङ्गीकृत्य अतिरिक्तपदार्थकल्पने गौरवात् निरवयवानां द्रव्याणामेव स्वतोव्यावर्त्तकत्वं वक्तुमुचितं, न तु कल्पित-विशेषाणामित्याहुः। अत एव कारिकावलीदिनकरीये 'नवीनास्तु विशेषे-ऽतिरिक्ते मानाभावः, यथैव विशेषाणां स्ववृत्तिधर्मं विना व्यावृत्तत्वं तथैव नित्यद्रव्याणामपीत्याहु'रिति। नव्यमतादिविलक्षणतया निरुक्तविशेष-पदार्थाङ्गीकार एव कणादमतस्य वैशेषिकसंज्ञाबीजमित्यनुसन्धेयम्।

---

## ভাষ্যতাৎপর্য্য

অন্ত্য অথচ নিত্যদ্রব্যবৃত্তিপদার্থকে বিশেষ কহে। ইতঃপূর্ব্বে অনুবৃত্তির হেতু ধর্ম্মকে সামান্য এবং ব্যাবৃত্তির হেতু ধর্ম্মকে বিশেষ বলা হইয়াছে। যদি প্রকৃত বিশেষত্বও ব্যাবর্ত্তকত্বমাত্রই হয়, তবে সামান্য দ্রব্যত্বাদি ধর্ম্মও উক্ত বিশেষলক্ষণাক্রান্ত হইয়া পড়ে; তাহাতে বিশেষত্ব ও সামান্যত্ব বিরুদ্ধ ধর্ম্ম না হওয়ায় উক্ত দুই রূপে বিভাগ অসম্ভব হয়। এই জন্য বিশেষ বলিতে যাইয়া ভাষ্যকার যে বহুবচন নির্দ্দিষ্ট করিয়াছেন, উহা দ্বারা বিশেষের নানাত্ব লাভ করায় বিশেষের প্রত্যেক ব্যক্তিতে ভেদনিবন্ধন সামান্যতা খণ্ডন করিয়াছেন।

নিত্যদ্রব্যবৃত্তি এই শব্দের জগদীশমতে অর্থ এই যে, যাহা সর্ব্বদা দ্রব্যে সমবেত। কেবলমাত্র দ্রব্যসমবেত বলিলে দ্রব্য কর্ম্ম ও ঘটত্বাদিতে অতিব্যাপ্তি হয়, এই জন্য 'সর্ব্বদা' বলা হইয়াছে। সমবেত দ্রব্যমাত্রই জন্য, উৎপত্তির পূর্ব্বে তাহা দ্রব্যে সমবেত থাকে না এবং বিনাশের পরেও উহা দ্রব্যসমবেত নহে। কর্ম্ম জন্য ও বিনশ্বর, তাহাও সর্ব্বদা দ্রব্যে সমবেত থাকে না। ঘটত্ব ঘটেই সমবায় সম্বন্ধে থাকে, উক্ত ঘটের সৃষ্টির আদি ও প্রলয়কালে সত্তা না থাকায় ঘটত্ব সর্ব্বদা দ্রব্যসমবেত হইতে পারে না। অতএব ঐ সকল পদার্থে অতিব্যাপ্তি হইবে না। গুণত্ব দ্রব্যে সমবেতই হয় না, গুণেই উহা সমবায় সম্বন্ধে থাকে; অতএব দ্রব্যপদ দ্বারা গুণত্বের ব্যাবর্ত্তন করা হইয়াছে।

সর্ব্বদা যাহা দ্রব্যে সমবেত, তাহাকে বিশেষ বলিলে গগনপরিমাণাদি নিত্য

গুণ ও দ্রব্যত্বপ্রভৃতিতে অতিব্যাপ্তি হয়; কারণ গগন ও গগনপরিমাণাদি নিত্য বলিয়া গগনপ্রভৃতিতে গগনপরিমাণাদি নিত্যই সমবেত আছে। দ্রব্যত্ব নিত্য-দ্রব্য গগনাদিতে থাকে বলিয়াই সর্ব্বদা দ্রব্যসমবেত হইয়া থাকে। ঐ অতিব্যাপ্তি-বারণের জন্য বলিতে হইবে যে, যাহা সর্ব্বদা নিত্য দ্রব্যে থাকে, অথচ নিত্যদ্রব্য-বৃত্তি জাতি ও গুণ হইতে ভিন্ন, তাহাই বিশেষ। দ্রব্যত্ব ও নিত্যগুণ সর্ব্বদা নিত্যদ্রব্যে সমবেত হইলেও উহা জাতি ও গুণ হইতে ভিন্ন নহে, অতএব তাহাতে অতিব্যাপ্তি হইল না।

কেহ কেহ বলেন যে, জাতি ও জাতিমৎ হইতে ভিন্ন হইয়া যাহা কেবল নিত্যদ্রব্যে সমবেত, তাহাই বিশেষ। দ্রব্যত্বাদি জাতি ও নিত্যগুণ জাতিমৎ বলিয়াই উহাতে অতিব্যাপ্তি বারিত হইবে।

কেহ বলেন যে, অন্ত্য অর্থ মহাপ্রলয়ে বর্ত্তমান, ঐ অর্থ করিলে কর্ম্মে অতিব্যাপ্তি বারিত হয়। কেবল অন্ত্য বলিলে ঘটত্বাদি জাতির নিত্যতাহেতু ও ঘটাদিধ্বংসের মহা প্রলয়ে বর্ত্তমানতানিবন্ধন ঘটত্ব ও ঘটাদিধ্বংসে অতিব্যাপ্তি হয়; এই জন্য আবার নিত্যদ্রব্যবৃত্তি, অর্থাৎ নিত্যদ্রব্যমাত্রসমবেত এই বিশেষণ দেওয়া হইয়াছে। উক্ত বিশেষণ প্রয়োগ করিলেও নিত্যগুণ ও আত্মত্বজাতিতে অতিব্যাপ্তি হয়, কারণ নিত্যগুণ ও আত্মত্বজাতি অন্ত্য ও নিত্যদ্রব্যমাত্রে সমবেত, এই জন্য লক্ষণে বলিতে হইবে যে, যাহা কর্ম্মাবৃত্তিজাতিশূন্য এবং নিত্য দুইটী বস্তুতে সমবেত হয় না; অথচ অন্ত্য ও নিত্যদ্রব্য সমবেত, তাহাই বিশেষ। নিত্যগুণে কর্ম্মবৃত্তিগুণত্বাদি জাতি থাকায় উহা কর্ম্মাবৃত্তিজাতিশূন্য নহে। আত্মত্বজাতি অনেক আত্মায় থাকে বলিয়া উহা নিত্যদ্বয়ে অসমবেত নহে। অতএব উক্ত দুই স্থলে আর অতিব্যাপ্তি হইতে পারে না।

বাস্তবিক অন্ত্য অর্থাৎ চরমবিশেষ। যদপেক্ষা আর বিশেষ বা ব্যাবর্ত্তক ধর্ম্ম নাই, তাহাকেই অন্ত্য কহে। এই অর্থ দ্বারা স্বতোব্যাবৃত্তত্বই বিশেষের লক্ষণ পর্য্যবসিত হয়। উক্ত কল্পে নিত্যদ্রব্যবৃত্তি প্রভৃতি বিশেষের স্থানকথনমাত্র, উহা লক্ষণে প্রবিষ্ট নহে।

নব্যগণ বিশেষকে স্বতোব্যাবৃত্ত স্বীকার না করিয়া নিরবয়ব দ্রব্যকেই স্বতোব্যাবৃত্ত স্বীকার করেন, কাজেই তাহাদের আর বিশেষ পদার্থ মানিয়া লইতে হয় না।

কণাদমতে এই বিশেষ পদার্থ অতিরিক্ত স্বীকার করা হয় বলিয়াই এই দর্শনের নাম 'বৈশেষিকদর্শন' হইয়াছে।

---

## प्रशस्तपादभाष्यम्

**अयुतसिद्धानामाधार्य्याधारभूतानां यः सम्बन्ध इह-प्रत्ययहेतुः स समवायः। एवं धर्म्मिणामुद्देशः कृतः।**

[ इहेदमिति यतः कार्य्यकारणयोः स समवायः।—७अ—२आ—२६सूत्रमालम्बनम्। ]

---

## जगदीशसूक्तिः

समवायस्यैकत्वाद् विभागासम्भवेन तस्य लक्षणमेवाह अयुतेति। अयुतसिद्धानाम् अपृथग्भूतानां सर्वदा मिथः सम्बद्धानामिति (१) यावत्। तादृशानामाधार्य्याधारभूतानां यः सम्बन्धः स समवायः। तेनात्मत्वात्मनोर्नित्यद्रव्यद्रव्यत्वाद्यो(२)र्नित्यगुणगुणत्वा(३)द्योर्वा सम्बन्ध इति फलितम्, बहुवचनस्य नानानिरुक्तितात्पर्य्यकत्वात्। तन्मावच्च कालिकपरम्परा(४)सम्बन्धे अतिप्रसक्तमत उक्तमिहेति। इह द्रव्ये द्रव्यत्वमित्याकारकप्रत्यये हेतुः सम्बन्धमर्य्यादया भासमान इत्यर्थः। न तु तादृशप्रत्यये विषयविधया हेतुरित्यर्थो ग्राह्यः कणादनये समवायस्यातीन्द्रियत्वेन तदसम्भवात्।

उपसंहरति एवमिति। द्रव्यत्वाद्यवच्छिन्नधर्मिणामितरभेदक-

---

(१) समवेतानामिति (ख) पुस्तके।

(२) द्रव्यत्वयो—(ख) पुस्तके।

(३) गुणत्वयो—(ख) पुस्तके।

(४) परम्परादि—(ख) पुस्त कें

धर्मैर्विना उद्देशो द्रव्यादिपदेनोल्लेखः कृतः। द्रव्यत्वादीनान्तु पञ्चतावच्छेदकत्वेनोपन्नयात् न स्वावच्छिन्नेषु इतरभेदकमतस्तेषाम् उद्दिष्टत्वेऽपि न चतिरित्यभिप्रायः।

---

## सूक्तिदीपिका

अपृथग्भूतानामिति—पृथक्तया अनवस्थितानामित्यर्थः। नहि कदाचिद्व्यक्तिमन्तरेण समवेतानां जात्यादीनां समवायेनावस्थितिरिति भावः। कालिकेन तु जात्यादीनां व्यक्तिमन्तरेणापि अवस्थितिरस्त्येवेति निरुक्तमधस्तात्।

अयुतसिद्धानामिति—युतसिद्धिः पृथक्सिद्धिः पृथगवस्थितिः, उभयोरपि सम्बन्धिनोः परस्परपरिहारेण पृथगाश्रयाश्रयित्वं, सा येषां नास्ति तेषाम्। न च तन्त्वादिपरिहारेण पटादेः असत्त्वेऽपि पटादिपरिहारेण तन्त्वादीनां सत्त्वात् कथ निरुक्तपरस्परपरिहारेण उभयोरनवस्थितिकथनं सङ्गच्छत इति वाच्यं, परस्परपरिहारेण उभयोः पृथगाश्रयाश्रयिभावविरहस्य तदर्थत्वात्। युतसिद्धिस्ताद्दृशाश्रयाश्रयित्वं, तद् यत्र, तत्र संयोगो न समवायः सम्बन्धः, यथा त्वगिन्द्रियशरीरायोः; शरीरादिकं हि त्वगिन्द्रियादिपरिहारेण पृथगाश्रये स्वावयवादौ समाश्रितमिति भावः। सेतुकारास्तु—"अत्रायुतसिद्धयोः सम्बन्धः समवायः, अयुतसिद्धिश्च उभयोरसम्बद्धयोरविद्यमानता। संयोगस्थले च संयोगोत्पत्तेः पूर्व्वम् उभावसम्बद्धावपि तिष्ठतः, समवायस्थले तु नित्यसम्बन्धिनौ नित्यं सम्बद्धावेव"। इति व्याचक्षते। न च घटरूपादौ तत्समवायिकारणस्य घटादेरुत्पत्त्यनन्तरमेव रूपाद्युत्पत्तेस्तदसङ्गतिरिति वाच्यं, तत्रापि द्वयोरसम्बद्धभावेन युगपदवस्थित्यभावात्, उत्पत्तिक्षणे यदा घटादिस्तदा तदसम्बद्धरूपादेरभावात्, यदा च द्वयोः सत्त्वं, तदा तौ सम्बद्धावेव नासम्बद्धावित्यादिकमूहनीयम्।

युतसिद्धानां सम्बन्ध इत्येतन्मात्रोक्तौ धर्म्मसुखाद्योः कार्य्यकारणभावादिलक्षणसम्बन्धेष्वतिप्रसङ्ग इति आधार्य्याधारभूतानामित्युक्तम्। आधार्य्याधारभूतानामित्यनेन धर्म्मधर्म्मिणोरेव समवायो, न तु संयोगन्यायेन धर्म्मधर्म्मि-

भावानापन्नयोरपि क्वचिदिति समवायस्वरूपं दर्शितमित्यपि सेतुकाराणामाशयः।

आकाशाकाशपदादीनां वाच्यवाचकभावलक्षणसम्बन्धातिव्याप्तिवारणाय इहप्रत्ययहेतुरिति। नहि वाच्यवाचकभावलक्षणसम्बन्धेन वृत्त्यनियामकेन कदाचिदिहेति प्रत्ययो जन्यत इति। आधार्याधारभूतानामित्येतन्मात्रोक्तौ कुण्डवदरसंयोगादावतिप्रसङ्ग इति अयुतसिद्धानामित्युक्तम्। विशेषस्तु न्यायकन्दलीग्रन्थादावनुसन्धेयः।

वस्तुतस्तु नित्यसम्बन्धत्वं समवायत्वम्, अयुतसिद्धानामित्यादिकन्तु स्वरूप परिचायकमात्रम्। संयोगे अतिव्याप्तिवारणाय नित्येति। आकाशादावतिव्याप्तिवारणाय सम्बन्धेति। अत्र सम्बन्धांशे नित्यत्ववत् सम्बन्धप्रतियोग्यनुयोगिभिन्नत्वपर्य्यवसितं सम्बन्धिभिन्नत्वविशेषणमप्युपादेयम्, तेन नित्याभावादिस्वरूपसम्बन्धे नातिव्याप्तिः, तादृशस्वरूपसम्बन्धादीनां लाघवतः प्रतियोग्यनुयोग्यन्यतररूपत्वस्य सिद्धत्वादिति, अत एव हि नित्या प्राप्तिः समवाय इति लक्षणं सूचितं भवतीति' किरणावल्यामुदयनः प्राह।

समवायस्य संसर्गत्वे 'गुणक्रियादिविशिष्टबुद्धिर्विशेष्यविशेषणसंसर्गविषया विशिष्टबुद्धित्वात् दण्डी पुरुष इति विशिष्टबुद्धिवदि'त्यनुमानं प्रमाणमाहुः। नहि तत्र संयोगसम्बन्धः शक्यकल्पन इति वाच्यं संयोगस्य द्विष्ठतया प्रतियोग्यनुयोग्युभयवृत्तित्वस्य स्वीकर्त्तव्यत्वेन निर्गुणे गुणादौ संयोगस्य बाधादसङ्गतेः। संसर्गसत्त्वस्य संसर्गिसत्त्वनियामकत्वेन गुणादौ गुणत्वादिविशिष्ट बुद्धीनां संयोगे एकनिष्ठत्वाङ्गीकारेऽपि दोषापत्तेश्च। 'न चासौ संयोग एव; अन्यतरकर्म्मादीनां तदुत्पादकानामभावात् विभागपर्य्यवसानाभावाच्च सम्बन्धिनामयुतासिद्धत्वाच्च नियताधिकरणतयैवोन्नेयत्वात् अप्रत्यक्षत्वादेकत्वाच्च' इति सूत्रोपस्कारकाराणामभिप्रायः। स्वरूपसंसर्गानान्तु प्रतियोग्यनुयोगिस्वरूपभेदेन भेदस्य अपोहितुमशक्यतया महागौरवापेक्षया लाघवादेकस्यैव समवायस्य सिद्धेः। समवायस्यैकत्वादिति—ननु यदि लाघवादेकः समवायस्तदा य एव वायौ स्पर्शप्रतियोगिकः समवायः तस्यैव रूपप्रतियोगिकतया स्पर्शप्रतियोगिकसमवायस्य वायौ स्पर्शवत्त्वप्रतीत्यनुरोधेन आवश्यकत्वात् रूपवत्ताप्रतीतिरपि तत्र प्रमा स्यात् सम्बन्धसत्त्वस्य सम्बन्धिसत्त्वनियामकतायाः

सर्वतन्त्र-सिद्धान्तत्वात् इति चेन्न तत्तत्प्रतियोगिनिरूपितत्वविशिष्टसमवायत्वेन समवायस्य संसर्गतास्वीकारेण समवायस्य एकत्वेऽपि तथाविधातिप्रसङ्गस्य वारयितुं शक्यत्वात्, वायौ रूपाभावेन रूपवद्वस्त्वन्तर्भावेणैव समवायस्य रूपप्रतियोगिकत्ववैशिष्ट्येन तदितरत्र तादृशविशिष्टसमवायाभावात्। विस्तरस्तु अन्यत्र ज्ञातव्यः। तादृशप्रत्यय इति प्रत्यक्षात्मक इत्यर्थः। इदञ्च प्रत्यक्षे विषयस्य कारणत्वमिति सिद्धान्तमुपजीव्योक्तम्। कणादनय इति—न तु नैयायिकनये तन्मते समवायस्य प्रत्यक्षत्वात्; अत एव कारिकावलीग्रन्थे विश्वनाथः 'क्रियां जातिं योग्यवृत्तिं समवायञ्च तादृशं गृह्णाति चक्षुः सम्बन्धादालोकोद्भूतरूपयोः'। इति प्राह। समवायस्य प्रकृतसिद्धान्ते अप्रत्यक्षतया च तत्र अनुमानमेव मानमपि सङ्गतम्, अन्यथा सति ज्येष्ठप्रमाणे प्रत्यक्षे अनुमानप्रदर्शनमसङ्गतं स्यादिति ध्येयम्। वैशेषिकमते समवायस्य अतीन्द्रियत्वसाधकानुमानप्रयोगो यथा—समवायोऽतीन्द्रियः नित्यत्वे सति चेतनान्यासमवेतभावत्वादाकाशादिवदित्यादिः। नैयायिकास्तु इन्द्रियसम्बद्धविशेषणतासन्निकर्षेण समवायस्य प्रत्यक्षं भवत्येव, वैशेषिकमतावलम्बितातीन्द्रियत्वसाधकनिरुक्तानुमानस्य अप्रयोजकत्वात्। तथा च समवायो लौकिकप्रत्यक्षविषयः योग्यप्रतियोगिकत्वे सति विशेषणतया योग्यवृत्तित्वात् भूतलादिवृत्तिघटात्यन्ताभावादिवदित्यादेः प्रत्यक्षत्वसाधकानुमानस्य सत्त्वाच्च इति वदन्ति। अत एव किरणावल्यामुदयनाचार्य्याः 'इह तन्तुषु पट इह पटे शुक्लत्वं इह गवि गोत्वमित्यादयः प्रत्ययाः सम्बन्धमन्तरेणानुपपद्यमानास्तं व्यवस्थापयन्तीत्याहुः।

जातिशून्यत्वे सति सामान्यत्वविशेषत्वशून्यभावत्वं तल्लक्षणमिति किरणावलीप्रकाशे वर्द्धमानोपाध्यायाः प्राहुः। तत्र द्रव्यादावतिव्याप्तिवारणाय सत्यन्तं। सामान्ये विशेषे च अतिव्याप्तिवारणाय विशेष्यदले शून्यान्तम्। शक्तिसादृश्यादीनामुक्तपदार्थेषु यथायथमन्तर्भाव उपपादनीय इति नातिरिक्तपदार्थशङ्केति। दीधितिकृतस्तु—पदार्थतत्त्वनिरूपणाख्ये प्रकरणे कणादप्रोक्तानां कतिपयपदार्थानां खण्डनोपक्रमे समवायोऽपि च नैको जलादेर्गन्धादिमत्त्वप्रसङ्गात्, परन्तु नानैव, समवायत्वं पुनरनुगतमखण्डोपाधिरिति प्रतिपादयन्ति। तद्दोषसमुद्धरणन्तु कृतमस्माभिरधस्तादिति संक्षेपः।

## ভাষ্যতাৎপর্য্য

দুইটী বিভিন্ন পদার্থ একসঙ্গে মিলিত হইয়া থাকিতে গেলে উভয়ের মধ্যে একটী সম্বন্ধ থাকা প্রয়োজন হয়, যেমন বৃক্ষ ও পক্ষী দুইটী বিভিন্ন বস্তু, ঐ দুইটী বস্তু যখন মিলিত হইল, অর্থাৎ আকাশমার্গে উড়িয়া আসিয়া যখন পক্ষী বৃক্ষের উপর বসিল, তখন উভয়ের সংযোগনামে একটী সম্বন্ধ উৎপন্ন হইল। তাহা না হইলে বৃক্ষস্থিত পক্ষী ও অপর পক্ষীর সম্বন্ধে কোনও বৈলক্ষণ্য না থাকায় অন্য পক্ষীর সহিতও বৃক্ষের মিলন প্রতীতি হইতে পারিত। বাস্তবিক ত তাহা হয় না। অতএব উভয় বস্তুর মিলনের প্রতীতির বিষয়ীভূত উভয়ের একটী সম্বন্ধ স্বীকার করিতে হয়। উহা স্থানবিশেষে সমবায় স্বরূপাদি বিভিন্ন সংজ্ঞায় আখ্যাত হইয়া থাকে। যথা ঘট ও ভূতল প্রভৃতির পরস্পর মিলনকে সংযোগ, কপাল কপালিকা প্রভৃতি ঘটাবয়বে ঘটের মিলন ও গুণক্রিয়া প্রভৃতির সহিত দ্রব্যের মিলন দ্রব্যগুণ ও ক্রিয়ার সহিত জাতির মিলন ও নিত্যদ্রব্যে বিশেষের মিলনকে সমবায়, আবার কালে সমস্ত পদার্থের ও জন্য বস্তুতে সমানকালীন বস্তুর মিলনবিশেষকে কালিক, ঘটাভাবাদির ভূতলাদিতে মিলনকে দৈশিকস্বরূপ প্রভৃতি বলা হইয়া থাকে। ঐরূপ আবার তুল্য অধিকরণে দুইটী বস্তু থাকিলে তাহাদের পরস্পর সামানাধি-করণ্য সম্বন্ধ বলা হয়। এই প্রকার আরও বহু সম্বন্ধ আছে স্থানবিশেষে উহা জ্ঞাতব্য।

সমবায় বলিয়া যে সম্বন্ধের কথা উল্লেখ করা হইয়াছে, উহার সম্বন্ধী দুইটী পৃথক্‌ভাবে থাকে না, যেমন ঘট থাকিতে গেলেই তাহার অবয়বকে ছাড়িয়া বা ঘটের রূপাদি কখনও ঘটকে ছাড়িয়া অন্যত্র থাকিতে পারে না। এই জন্যই ভাষ্যকার বলিয়াছেন যে, আশ্রয় ও আশ্রয়িভাবে অবস্থিত যে বস্তুগুলি পরস্পর পৃথক্‌রূপে থাকিতে পারে না, তাহাদের বৈশিষ্ট্যপ্রতীতির হেতুভূত সম্বন্ধবিশেষই সমবায়। যথা গুণ ও ক্রিয়া প্রভৃতি দ্রব্যে আশ্রয়াশ্রয়িভাবে অবস্থিত ও উভয়ের পৃথক্‌রূপে কখনও স্থিতি নাই, এবং উভয়ের মিলনে দ্রব্যে গুণ বা ক্রিয়া আছে এইরূপ প্রতীতি হয়, অতএব ঐ উভয়ের সম্বন্ধ সমবায়। সংযুক্ত ঘট ও ভূতলাদির আশ্রয়াশ্রয়িভাবে অবস্থান ও ভূতলে ঘট আছে এইরূপ প্রতীতি হইলেও উহা পরস্পর অপৃথক্‌ভাবে অবস্থিত নহে, ঘট ও ভূতলের সংযোগের পূর্ব্বে

তাহাদের পৃথক্‌ভাবে স্থিতি প্রত্যক্ষতই উপলব্ধ হইয়া থাকে। অতএব উক্ত সংযোগসম্বন্ধ প্রভৃতিতে সমবায়ের লক্ষণের অতিব্যাপ্তি হইবে না।

ধর্ম্ম ও সুখ, অধর্ম্ম ও দুঃখ, ইহারা পরস্পর একে ছাড়িয়া অপরে না থাকিলেও পরস্পর আধারাধেয়ভাবে ধর্ম্মে সুখ আছে বা অধর্ম্মে দুঃখ আছে এরূপ বৈশিষ্ট্যের প্রতীতি হয় না, কাজেই ধর্ম্ম ও সুখাদির পরস্পর সামানাধিকরণ্য সম্বন্ধে অতিব্যাপ্তি হইল না।

বাস্তবিক নিত্যসম্বন্ধত্বই সমবায়ের লক্ষণ। বিশ্বনাথন্যায়পঞ্চানন মুক্তাবলী-গ্রন্থে স্পষ্টরূপে ঐ লক্ষণই প্রতিপাদন করিয়াছেন। নৈয়ায়িকচূড়ামণি উদয়নাচার্য্যও কিরণাবলীগ্রন্থে 'নিত্যা প্রাপ্তিঃ সমবায়ঃ' অর্থাৎ 'নিত্যসম্বন্ধ সমবায়' এইরূপ লক্ষণের প্রতিপাদন করিয়াছেন।

এ স্থলে আপাততই এই আশঙ্কা হয় যে, ঘটের রূপ প্রভৃতির উৎপত্তি ও বিনাশ প্রত্যক্ষসিদ্ধ, অতএব রূপাদির সহিতই তদীয় সম্বন্ধেরও উৎপত্তি ও বিনাশ যুক্তিসিদ্ধ, সম্বন্ধী না থাকিলে কিরূপে তদীয় সম্বন্ধের স্থিতি কল্পনা করা সম্ভব। তাহার উত্তর এই যে, সমবায় বলিয়া যে সম্বন্ধ কল্পনা করা হয়, উহা ব্যক্তিভেদে পৃথক্ নহে, সমবায় একমাত্র; অতএব ঘটের রূপাদি বিনশ্বর হইলেও গগনাদি নিত্যবস্তুতে যে গগনপরিমাণাদি নিত্যবস্তু বর্ত্তমান আছে, উহার সম্বন্ধ সমবায় এবং উহা চিরন্তন বলিয়াই সমবায়ের নিত্যতাকথন দোষগ্রস্ত নহে।

উক্ত সমবায় নৈয়ায়িক মতে প্রত্যক্ষসিদ্ধ হইলেও কণাদ মতে উহা অতীন্দ্রিয় বা অপ্রত্যক্ষ। কণাদের অভিপ্রায় এই যে, যাহা নিত্য অথচ চেতন ভিন্ন অন্য বস্তুতে সমবায় সম্বন্ধে থাকে না, তাহা প্রত্যক্ষ নহে, যেমন আকাশ প্রভৃতি। সমবায় নিত্য অথচ চেতন ভিন্ন বস্তুতে সমবেত নহে, অতএব তাহাও অপ্রত্যক্ষ। নৈয়ায়িকগণ ঐ ব্যাপ্তির কোনও প্রযোজক না থাকায় উহা স্বীকার করেন না, অতএব তাহাদের মতে সমবায় অতীন্দ্রিয় বলিয়া সিদ্ধ হইতে পারে না। পরন্তু তাহারা বলেন যে, যাহার প্রতিযোগী ও অনুযোগী প্রত্যক্ষের যোগ্য, উহা নিশ্চয়ই লৌকিক প্রত্যক্ষের বিষয় হইয়া থাকে, যথা ভূতলবৃত্তি ঘটাত্যন্তাভাবাদি। সমবায়েরও প্রতিযোগী ঘটাদি ও অনুযোগী কপালাদি যোগ্য, অতএব সমবায় লৌকিকপ্রত্যক্ষবিষয়। তাহা হইলে ন্যায়মতে সমবায় প্রত্যক্ষ, কণাদ মতে প্রত্যক্ষ নহে, পরন্তু অনুমানগম্য। উক্ত অনুমান এইরূপ যথা দ্রব্যাদিতে যে

গুণক্রিয়াদিবিশিষ্ট বুদ্ধি হয়, উহা বিশেষ্য ও বিশেষণের সম্বন্ধকে বিষয় করিয়া থাকে; কারণ উহা বিশিষ্টবুদ্ধি। এস্থলে বিশিষ্টবুদ্ধিত্ব হেতু, বিশেষ্যবিশেষণসম্বন্ধবিষয়কত্ব সাধ্য ও গুণক্রিয়াদিবিশিষ্টবুদ্ধি পক্ষ। গুণক্রিয়াদিবিশিষ্টবুদ্ধিস্থলে সংযোগসম্বন্ধ তাহার বিষয় হইতে পারে না, কারণ সংযোগসম্বন্ধ দ্বিষ্ঠ বলিয়া প্রতিযোগী ও অনুযোগী উভয়েই সংযোগ থাকিতে হয়, অথচ গুণাদি নির্গুণ বলিয়া গুণাদিতে উহার সত্তা একান্ত অসম্ভব। স্বরূপসম্বন্ধও গুণাদির সম্বন্ধ নহে, অতএব তদতিরিক্ত যে সম্বন্ধের সিদ্ধি হয়, উহাই সমবায় বুঝিতে হইবে।

এখন আশঙ্কা হইতেছে এই যে, যদি সমবায় একই হয়, তবে স্পর্শের ও রূপের সমবায়ের কোনও পার্থক্য না থাকায় সমবায়সম্বন্ধে স্পর্শবৎ রূপশূন্য বায়ুতে সমবায়সম্বন্ধে রূপবত্তাপ্রতীতি যথার্থ হইতে পারে। তাহার উত্তর এই যে, সমবায় এক হইলেও রূপপ্রতিযোগিকত্ববিশিষ্টসমবায়ত্বরূপেই সমবায় রূপের সংসর্গ। সমবায়ে বায়ু অন্তর্ভাবে উক্ত বিশিষ্টসমবায়ত্ব স্বীকৃত নহে, অতএব ঐ আপত্তি বারিত হয়। এই রূপ অন্যত্রও বুঝিতে হইবে।

---

## প্রশস্তপাদভাষ্যম্

**ষণ্ণামপি পদার্থানাং সাধর্ম্ম্যমস্তিত্বা(১)ভিধেয়ত্ব-জ্ঞেয়ত্বানি। আশ্রিতত্ব- (২) ঞ্চান্যত্র নিত্যদ্রব্যেভ্যঃ। দ্রব্যাদীনাং পঞ্চানামপি (৩) সমবায়িত্বমনেকত্বঞ্চ। গুণাদীনাং পঞ্চানামপি (৪) নির্গুণত্বনিষ্ক্রিয়ত্বে। দ্রব্যাদীনাং ত্রয়াণাং সত্তাসম্বন্ধঃ সামান্যবিশেষবত্ত্বং স্বসময়ার্থশব্দাভিধেয়ত্বং ধর্ম্মাধর্ম্মকর্তৃত্বঞ্চ।**

---

(১) সাধর্ম্ম্যমিতি—(ঘ) পুস্তকে নাস্তি।

(২) আশ্রিতত্বঞ্চান্যত্র—(গ) (ঘ) পুস্তকে।

(৩) অপীতি—(ঘ) পুস্তকে নাস্তি।

(৪) অপীতি—(ঘ) পুস্তকে নাস্তি।

कार्य्यत्वानित्यत्वे कारणवतामेव। कारणत्वञ्चा-न्यत्र पारिमाण्डल्या(५)दिभ्य। द्रव्याश्रितत्वञ्चान्यत्र नित्यद्रव्येभ्यः। सामान्यादीनां त्रयाणामपि(६) स्वात्म-वत्त्वं बुद्धिलक्षणत्वमकार्य्यत्वमकारणत्वमसामान्य-विशेषवत्त्वं नित्यत्वमर्थशब्दानभिधेयत्वञ्चेति।

[ द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमनपेक्ष इति गुणलक्षणम्—१अ—१आ—१६ सू। एकद्रव्यगुणं सयोगविभागे—१अ—१आ—१७सू। गुणकर्म्मसु च भावान्न कर्म्म न गुणः—१ अ—२आ—९सू। कर्म्मभिः कर्म्माणि गुणैश्च गुणा व्याख्याताः—७अ—१आ—१५सू। सदनित्यं द्रव्यवत् कार्य्यं कारणं सामान्यविशेषवदिति द्रव्यगुणकर्म्मणामविशेषः—१अ—१आ—८सू। अर्थ इति द्रव्यगुणकर्म्मसु—८अ—२आ—३सू। सदिति यतो द्रव्यगुणकर्म्मसु सा सत्ता—१अ—२आ—७सू। सामान्यविशेषाभावेन च—१अ—२आ—१०-१२-१४-१६सू.। सामान्यं विशेष इति बुद्ध्यपेक्षम्—१अ—२आ—३सू। इहेदमिति यतः कार्य्यकारणयोः स समवायः—७अ—२आ २६सू। एतान्या-लम्बनसूत्राणि। ]

---

## जगदीशसूक्तिः

षण्णां द्रव्यादीनां, अपिशब्देन अभावस्याप्युपग्रहः। अस्तित्व स्वरूपसत्त्वं तच्चोभयावृत्तिधर्मवत्त्वम्। अभावस्य अलक्ष्यत्वे तु तादृशभावत्वं वाच्यम्। एवमग्रेऽपि। अस्तित्वं विधिमुखप्रतीति(७)विषयत्वं, तच्च प्रतियोग्यनपेक्षनिरूपणत्वमित्याचार्य्यव्याख्यानन्तु चिन्त्यम्। निरूपणं हि तत्र यदि साक्षात्कारः, तदा अतीन्द्रिये द्रव्यादावव्याप्तेः।

(५) माण्डिल्येति क्वचित् पाठः।

(६) अपीति (घ)—पुस्तके नास्ति।

(७) प्रत्ययेति क्वचित् पाठः।

यदि च ज्ञानमात्रं तर्हि अभावे अतिव्याप्तेः। अनपेक्षपदवैयर्थ्यञ्च स्यादिति। अभिधेयत्वं पदशक्यत्वं, ज्ञेयत्वं ज्ञानविषयत्वम्। आश्रितत्वञ्चेति चोऽवधारणे। तथा च षण्णामपि पदार्थानां नित्यद्रव्येभ्योऽन्यत्रैव आश्रितत्वम् आधेयत्वं साधर्म्यमिति पूर्वेणान्वयः। तेन नित्यानां परमाणूनामनाश्रितत्वेऽपि न क्षतिः तेषामलक्ष्यत्वात्।

द्रव्यादीनां पञ्चानां समवायित्वं समवायप्रतियोगित्वं समवेतवृत्तिभावविभाजकधर्म्मवत्त्वं समवायावृत्तिधर्म्मवद्भावत्वं वा फलितम्। तेन सामान्यविशेषयोः समवायित्वस्य नित्यद्रव्ये च समवेतत्वस्य असत्त्वेऽपि न तेष्वव्याप्तिः।

निष्क्रियत्वं क्रियावदवृत्तिभावविभाजकधर्म्मवत्त्वं नातो विभुष्वतिव्याप्तिः। द्रव्येति—द्रव्यगुणकर्म्मणां सत्तासम्बन्धः सत्तासमवायः। सामान्यविशेषवत्त्वं सत्ताव्याप्यजातिमत्त्वम्। स्वसमयेति—वैशेषिकाणां स्वसङ्केतेनार्थशब्दाभिलप्यमानत्वमित्यर्थः। धर्म्माधर्म्मकर्त्तृत्वम् अदृष्टजनकभावत्वं, तेन धर्म्माधर्म्मयोरेकमात्रजनके नाव्याप्तिः।

भावत्वोपादानाच्च नाशौचाद्यभावे अतिप्रसङ्गः। न च सुवर्णादिद्रव्य-तदीयगुरुत्वादिगुण-तद्ग्रहणादिकर्म्मणाम् यथा धर्म्मजनकत्वं यथा वा पुरीषादिद्रव्य-तत्संयोगरूपगुण-तद्ग्रहणादिकर्म्मणामधर्म्मजनकत्वं तथा तादृशद्रव्यादिगतानां सुवर्णत्वादिजातीनामपि परम्परया धर्म्माधर्म्मजनकत्वं सुवचमतस्तत्रातिव्याप्तिरिति वाच्यं, सुवर्णत्वादिजातेर्धर्म्मादिजनकतावच्छेदकत्वेनैवोपक्षयात्तीर्थादिदेशस्य तत्संयोग-तदनुसरणादेर्धर्म्माधर्म्मजनकतायाः श्रुतिसिद्धत्वादिति भावः।

कारणवतामेवेति—द्रव्यादीनां त्रयाणामित्यनुषज्यते। कार्य्यत्वंसमवायावच्छिन्नजन्यत्वं, अनित्यत्वं विनाशिभावत्वं, नातो ध्वंसे प्रागभावे चातिव्याप्तिः। पारिमाण्डल्यं परमाणुपरिमाणं, आदिपदेन द्व्यणुकपरिमाणं परममहत्त्वम् आत्मविशेषगुणाश्च गृह्यन्ते। तथा च

तेभ्योऽन्यत्र द्रव्यादीनां त्रयाणां कारणत्वं निमित्ततान्यकारणतावच्छेदकजातिमत्त्वं। ज्ञानादिकमिच्छादौ निमित्तकारणमेव। परिमाणस्य च अणुत्वमहत्त्वत्वादिना न परिमाणहेतुत्वं, किन्तु वितस्तित्वहस्तत्वादिवैजात्यैरेवेति न परमाणुत्वादावतिव्याप्तिः। किरणावल्यान्तु पारिमाण्डल्यादिभ्य इत्यत्रादिपदेन परममहत्त्वान्त्यावयविगतरूपरसगन्धस्पर्शपरिमाणानि द्वित्वद्विपृथक्त्वपरत्वापरत्वानि विनश्यदवस्थद्रव्यगतसंयोगविभागकर्म्माणि शब्दाजनकशब्दस्वरमसंस्कारस्तादृशज्ञानञ्च परिगृह्यन्तानि। कारणत्वञ्च ज्ञातधर्म्मेतरभावं प्रति फलोपधायकत्वमिति व्याख्यातम्; तन्मते सुखदुःखादेरजनितरूपादेः पाकनष्टपरमाणुरूपादिकस्य च लक्ष्यत्वात्तत्राव्याप्तिप्रकारश्चिन्तनीयः।

द्रव्याश्रितत्वं द्रव्यसमवेतसत्त्वं समवेतत्वसम्बन्धेन द्रव्यवत्सत्त्वं वा द्रव्यादीनां त्रयाणां मध्ये नित्यद्रव्येभ्योऽन्यत्रेत्यर्थः। संयोगेनाश्रितोऽपि परमाणुर्न समवेत, समवेतावपि सामान्यविशेषौ न सन्तौ इति तद्व्युदासः। चकारान्नित्यद्रव्यान्यजातीयत्वस्योपग्रहः। द्रव्याश्रितत्वं द्रव्यसमवायिकारणकत्वं नित्यद्रव्येभ्यो नित्यगुणेभ्यश्चान्यत्र द्रव्यादित्रयाणां साधर्म्म्यं, चकारेण नित्यगुणस्यापि समुच्चयादित्यपि वदन्ति।

सामान्येति—सामान्यविशेषसमवायानां स्वात्मकमेव सत्त्वं, न तु सत्ता जातिरित्यर्थः। बुद्धिलक्षणत्वं बुद्धिं प्रत्येव जनकत्वं बुद्ध्यन्यभावजनकावृत्तिभावविभाजकधर्म्मवत्त्वमिति यावत्। सामान्यमनुगतबुद्धौ विषयविधया, विशेषो लिङ्गविधया व्यावृत्तबुद्धौ, समवायः सन्निकर्षविधया प्रत्यक्षबुद्धौ कारणम्। द्रव्यादित्रिकन्तु बुद्धिभिन्नेऽपि द्रव्यादौ कारणमिति न तत्रातिप्रसङ्ग।

यद्वा बुद्धेर्बुद्धिविशेषस्य सामान्यशून्यभावत्वप्रकारकयथार्थज्ञानस्य लक्षणत्वं विशेष्यत्वमित्यर्थः। अकार्य्यत्वं प्रागभावप्रतियोग्यवृत्तिभावविभाजकधर्म्मवत्त्वं। अकारणत्वं निमित्तकारणतान्यकारणता

शून्यभावत्वं। असामान्येति सत्तावान्तरजातिशून्यभावत्वमित्यर्थः। नित्यत्वं विनाश्यवृत्तिभावविभाजकधर्म्मवत्त्वं। नातो नित्यद्रव्यादावत्यन्ताभावादौ च प्रसङ्गः। अर्थेति—स्वसमयार्थशब्दाप्रतिपाद्यत्वमित्यर्थः। चकारेण जन्यावृत्तिभावविभाजकधर्म्मवत्त्वाद्युपग्रहः। इतिः दिगुपदर्शनार्थः, तेन द्रव्यगुणयोः कर्म्मान्यसत्त्वं सामान्यविशेषयोः निःसामान्यसमवेतत्वमित्यादिकमपि द्रष्टव्यम्॥

---

## सूक्तिदीपिका।

अभावस्यापीति—स्वमते विशेषतोऽभावस्य अनुल्लेखेऽपि यथा न तुच्छत्वं तथोक्तमधस्तात्, अत एव अभावसप्तमानां सर्व्वपदार्थानामेव अस्तित्वादीनि साधर्म्म्याणीति सङ्गच्छते।

उभयावृत्तीति—तत्त्वञ्च स्वप्रतियोगिनिरूपितत्व-स्वानुयोगिनिरूपितत्वैतदुभयसम्बन्धेन भेदविशिष्टवृत्तित्वाभाववत्त्वं, स चायं धर्म्मस्तत्तद्व्यक्तित्वादिः।

ननु समुद्दिष्टपूर्व्वाणामेव साधर्म्म्यकथनं सङ्गच्छते नानुद्दिष्टपूर्व्वाणामिति अपिशब्देन अभावस्योपग्रहो न युक्त इत्यत आह अभावस्येत्यादि। अलक्ष्यत्वे त्विति—प्रकृतसाधर्म्म्यवत्तया अनभिमतत्वे त्वित्यर्थः। तादृशेति—उभयावृत्तिधर्म्मवदित्यर्थः। अग्रेऽपीति—अभिधेयत्वादिरूपसाधर्म्म्यस्थलेऽपि भावत्वपर्य्यन्तमनुसृत्य अभावव्यावृत्तिः कर्त्तव्येति भावः।

प्रतियोग्यनपेक्षेति—प्रतियोगिनिरूपणानधीनेत्यर्थः। एतेन अभावो व्यावृत्तः अभावानां प्रतियोगिनिरूपणाधीननिरूपणत्वस्य प्रागुपपादितत्वात्। नित्यद्रव्येभ्योऽन्यत्रैवेति—तदुक्तं विश्वनाथेन 'अन्यत्र नित्यद्रव्येभ्य आश्रितत्वमिहोच्यते' इति। आधेयत्वमिति- तच्च सर्व्वाधारताप्रयोजककालिकातिरिक्तसम्बन्धावच्छिन्नमनुसर्त्तव्यं तादृशकालिकसम्बन्धेन नित्यस्यापि द्रव्यस्य काले वर्त्तमानत्वात्, अन्यथा कालस्य सर्व्वाधारत्वानुपपत्तेः।

द्रव्यादीनामिति—द्रव्यगुणकर्म्मसामान्यविशेषाणामित्यर्थः। समवायप्रतियोगित्वमिति—ननु समवायप्रतियोगित्वं समवायसम्बन्धावच्छिन्नाधेयत्वं तच्चात्मगगनपरमाण्वादावव्याप्तमित्यत आह समवेतेत्यादि। तथाहि आत्म-

गगनादीनां समवायप्रतियोगिताशून्यत्वेऽपि समवेतघटादिवृत्तिभावविभाजकद्रव्यत्वधर्म्मवत्त्वेन नाव्याप्तिशङ्केति भावः। समवेतवृत्तित्वं तादृशधर्म्मवत्त्वञ्च तादृशभावविभाजकतावच्छेदकसमवायस्वरूपान्यतरसम्बन्धेन नातः कालिकविशेषणतया द्रव्यत्वादिमत्त्वस्य ध्वंसे वर्त्तमानत्वेऽपि तत्रातिप्रसङ्गः। ननु समवेतपदस्य समवायप्रतियोग्यर्थकतया समवायप्रतियोगिकस्वरूपस्यापि समवायानतिरिक्तत्वेन समवायस्यापि समवेतत्वं प्राप्तं, तथा च सति समवायत्वस्यापि समवेतवृत्तिभावविभाजकतया समवायातिप्रसङ्गो दुर्वार इत्यत आह समवायावृत्तीत्यादि। तथाहि समवायस्य समवायावृत्तिधर्म्मवत्त्वाभावात् नातिप्रसङ्गः।

तेनेति—समवायित्वमित्यस्य यथाश्रुतसमवायानुयोगित्वरूपार्थपरिहारात् समवायप्रतियोगित्वाद्यर्थानुसरणेनेत्यर्थः। समवायित्वस्य समवायानुयोगित्वस्य। समवेतत्वस्य समवायप्रतियोगित्वस्य। तेषु सामान्यविशेषनित्यद्रव्येषु। अव्याप्तिरित्युपलक्षणं, तृतीयकल्पानुसरणेन समवायातिव्याप्त्यादिपरिहारोऽपि बोध्यः।

क्रियावदवृत्तीत्यादि—तथाहि विभुष्वात्मादिषु भावविभाजकधर्म्मो द्रव्यत्वमेव, तस्य सक्रिये घटादावपि वर्त्तमानतया न तत् क्रियावदवृत्तीति नातिव्याप्तिरिति भावः।

सत्ताव्याप्यजातिमत्त्वं—सत्तावान्तरजातिमत्त्वं, द्रव्यादिषु त्रिषु द्रव्यत्वादेः सत्त्वात् तस्य च सत्ताव्याप्यत्वात्। स्वसङ्केतेनेति—तदुक्तं कणादेन 'अर्थ इति द्रव्यगुणकर्म्मसु' इति।

तेनेत्यादि—तथाहि धर्म्माधर्म्मयोरुभयोरेवादृष्टतया एकमात्रजनकस्यापि अदृष्टजनकत्वात्तत्रैनाव्याप्तिरिति भावः।

समवायेत्यादि—यथाश्रुतजन्यत्वमात्रपरिग्रहे तु ध्वंसातिप्रसङ्गः स्यात्। द्रव्यादीनां त्रयाणामित्यस्याननुषङ्गादिपक्षे तु यथाश्रुतं जन्यत्वमात्रमेव सम्यक्।

यथाश्रुतमनित्यत्वन्तु ध्वंसाप्रतियोगित्वसमानाधिकरणप्रागभावाप्रतियोगित्वशून्यत्वं, तच्च ध्वंसे प्रागभावाप्रतियोगित्वशून्यतया प्रागभावे च ध्वंसाप्रतियोगित्वशून्यतया अतिप्रसक्तमिति विनाशीत्यादिपारिभाषिकार्थविशेषसमाश्रयणम्। तथाहि ध्वंसे विनाशित्वस्य भावत्वस्य च द्वयोरेव समं

विरहात् प्रागभावे च विनाशित्वे सत्यपि भावत्वस्याभावात् न निरुक्तानित्यत्वमिति भावः। निमित्ततान्येति—इच्छादिनिमित्ते ज्ञानादावतिप्रसङ्गनिराकरणाय। निमित्तकारणमेवेति—अत एव सिद्धान्तमुक्तावल्यां विश्वनाथः—'आत्मविशेषगुणानान्तु कुत्राप्यसमवायिकारणत्वं नास्ति, तेन तद्भिन्नत्वं सामान्यलक्षणे देयमेवे'ति प्राह। समवायिकारणत्वन्तु द्रव्यान्यत्वादेव निरस्तम्।

ज्ञातृधर्म्मेतरेत्यादि—ज्ञातृधर्म्मा इच्छादयः, तद्भिन्नभावं प्रतीति तदर्थः। एतत्कल्पे निमित्ततान्येति कारणताविशेषणमनुपादेयम्, ज्ञानादीनां ज्ञातृधर्म्मेतरभावं प्रति जनकताशून्यत्वादेवातिप्रसङ्गाभावात्। एतन्मते योगिप्रत्यक्षादौ विषयादेः कारणत्वे सत्यपि नातिप्रसङ्गः, प्रत्यक्षस्य ज्ञातृधर्म्मत्वात्। पूर्व्वकल्पेऽपि निमित्ततान्यत्वस्य कारणताविशेषणतया अतिव्याप्तिनिरासस्य दर्शितत्वादिति।

न तु सत्तेति—सत्ताजातिः द्रव्यगुणकर्म्मत्रितयमात्रवृत्तित्वादिति भावः। बुद्धिं प्रत्येव जनकत्वमित्यत्र एवशब्दस्य इतरव्यवच्छेदार्थतया बुद्धिमात्रजनकत्वं बुद्धान्याजनकत्वे सति बुद्धिजनकत्वमित्यर्थः। तदेव स्पष्टयति बुद्धान्येत्यादिना। अत्र अवृत्तित्वं धर्म्मवत्त्वञ्च भावविभाजकतावच्छेदकसम्बन्धेन बोध्यम्। तेन सम्बन्धान्तरमादाय न द्रव्याद्यतिव्याप्तिः। आचार्य्यास्तु 'बुद्धिलक्षणत्वं, बुद्धिमात्रममीषां लक्षणं प्रमाणं, न तु द्रव्यादिवत् प्रमाणान्तरमस्तीत्यर्थः। अनुवृत्तबुद्धिर्व्यावृत्तबुद्धिरिहेति बुद्धिरित्येव हि सामान्यादित्रये प्रमाण' मित्याहुः। तदयुक्तं सामान्यसिद्धौ चक्षुरादेरपि प्रमाणत्वादिति।

विषयविषयेति इदमुपलक्षणं, सामान्यस्य अलौकिकप्रत्यासत्तिरूपत्वेनापि बुद्धिं प्रति कारणत्वं बोध्यम्।

प्रागभावेत्यादि—अत्रापि अवृत्तित्वं धर्म्मवत्त्वञ्च भावविभाजकताघटकसंसर्गेण, नातः पूर्ववदतिप्रसङ्गः। प्रागभावप्रतियोग्यवृत्तिधर्म्मवत्त्वमात्रस्य गगनादावतिप्रसङ्गवारणाय भावविभाजकेति। उक्तमेवार्थमभिसन्धाय 'अकार्य्यत्वमनादित्व'मित्याचार्य्यैर्व्याख्यातम्।

निमित्तेत्यादि—सामान्यादीनां विषयत्वादिना कारणत्वस्य स्वयमेवोपदर्शिततया असम्भववारणाय कारणतायां निमित्तकारणतान्येति। 'अका-

রণান্যমাত্রধর্ম্মেতরকার্য্যাপেক্ষয়া’ ইতি ত্বাচার্য্যব্যাখ্যানে নেদমুপাদেয়ং নিরুক্ত-
কারণত্বস্য আত্মধর্ম্মনিরূপিতত্বাদিতি।

ন্যায়কন্দলীকৃতস্তু—‘অকারণত্বং সমবায্যসমবায়িকারণত্বাভাবঃ, ন তু
নিমিত্তকারণত্বপ্রতিষেধো বুদ্ধিনিমিত্তত্বাভ্যুপগমা’দিত্যাহুঃ।

সত্তেত্যাদি—ননু সামান্যাদিষু সত্তায়া অপি অভাবাৎ জাতিশূন্যত্বমাত্রং
সম্যগিতি চেন্ন স্বাত্মবত্ত্বমিতি সাধর্ম্ম্যব্যাখ্যানাবসর এব সত্তাজাতি-
শূন্যত্বস্য উক্তপ্রায়ত্বাৎ, পুনরুক্তিশঙ্কানিরাকরণায়েব জাতৌ সত্তাবান্তরেতি
বিশেষণপ্রক্ষেপাৎ। ন্যায়কন্দলীকৃতোঽপি ‘অসামান্যবিশেষবত্ত্বমপরজাতি-
রহিতত্বমিত্যর্থ’ ইত্যাচক্ষতে। স্বাত্মবত্ত্বমিত্যস্য চ সামান্যরহিতত্বমিত্যে-
বার্থমাহুঃ। বিনাশ্যবৃত্তীত্যাদি—ধ্বংসাভাবস্য অবিনাশিতয়া তত্রাতি-
ব্যাপ্তিবারণায় ভাববিভাজকেতি। নিত্যদ্রব্যাদাবতিপ্রসঙ্গবারণায় বিনাশ্য-
বৃত্তীতি।

স্বসময়েত্যাদি—বৈশেষিকনয়ে দ্রব্যগুণকর্ম্মস্বেব অর্থপরিভাষাবিষয়ত্ব-
মিত্যুক্তমধস্তাৎ।

দ্রব্যগুণয়োঃ কর্ম্মান্যসত্ত্বমিত্যুপলক্ষণ, দ্রব্যস্য গুণকর্ম্মান্যসত্ত্বং গুণস্য
দ্রব্যকর্ম্মান্যসত্ত্বং কর্ম্মণো দ্রব্যগুণান্যসত্ত্বং দ্রব্যকর্ম্মণোঃ গুণান্যসত্ত্বং গুণ-
কর্ম্মণোঃ দ্রব্যান্যসত্ত্বমিত্যাদিকমপি প্রতিপত্তব্যম্।

---

## ভাষ্যতাৎপর্য্য

দ্রব্যাদি ষট্‌পদার্থের স্বরূপনির্দ্দেশ ও বিভাগ করিয়া সম্প্রতি সাধর্ম্ম্য ও
বৈধর্ম্ম্যের বিবরণ করিতেছেন। উক্ত পদার্থসমূহের কতকগুলি ধর্ম্ম আছে
যাহা সকল পদার্থেই থাকে উহাকে পরিভাষায় কেবলান্বয়ী ধর্ম্ম বলা হয়। প্রথমত
সেই ধর্ম্মের কথাই বলা হইয়াছে, পরে ক্রমে তদপেক্ষা অল্পপদার্থবৃত্তি ধর্ম্মের কথা
বলা হইবে। বিশ্বনাথপ্রভৃতি নৈয়ায়িকগণও নিজ নিজ গ্রন্থে ঐ রূপেই পদার্থের
ধর্ম্ম বিবরণ করিয়াছেন। এখন দেখা যাউক যে, উক্ত কেবলান্বয়ী বা সর্ব্বপদার্থ-
বৃত্তি কি কি ধর্ম্ম হইতে পারে। অস্তিত্ব অভিধেয়ত্ব ও জ্ঞেয়ত্ব প্রভৃতি ধর্ম্ম উক্ত
ষট্‌পদার্থ ও অভাব এই সকল পদার্থেই থাকে। কারণ অস্তিত্ব স্বরূপতঃ পদার্থের

সত্তা। যে পদার্থ স্বরূপতঃ সৎ নহে, সেরূপ পদার্থই অপ্রসিদ্ধ ; অতএব পদার্থ বলিয়া স্বীকার করিতে গেলেই তাহাকে স্বরূপতঃ সৎ বলিয়া মানিতে হইবে, অতএব সকল পদার্থেই স্বরূপসত্ত্বরূপ অস্তিত্ব রহিয়াছে। কেহ বলেন যে, অস্তিত্ব উভয়াবৃত্তিধর্ম্মবত্ত্ব, অর্থাৎ যে ধর্ম্ম দুইটী বস্তুতে থাকে না তাদৃশ ধর্ম্মবিশিষ্টত্ব। প্রত্যেক পদার্থেরই পৃথক্ পৃথক্ ব্যক্তিত্ব আছে, দ্রব্য প্রতিব্যক্তিভেদে ভিন্ন, অতএব তাহার পৃথক্ পৃথক্ ব্যক্তিত্ব থাকিবেই। গুণাদিরও প্রতিগুণভেদে ব্যক্তিত্ব সকলেই স্বীকার করিয়া থাকেন, অতএব ঐ পৃথক্ পৃথক্ তত্তদ্ব্যক্তিত্বকেই উভয়াবৃত্তিধর্ম্মপদে ধরিয়া প্রতিপদার্থেই উভয়াবৃত্তিধর্ম্মবত্ত্ব উপপাদন করা যায়। অভিধেয়ত্ব পদশক্যত্ব, জগতে যে কোনও পদার্থ আছে, সেই সকল পদার্থেরই বাচক শব্দ আছে। এমন কোনও বস্তু নাই, যাহার বাচক শব্দ নাই। সকলে সকল বস্তুর সংজ্ঞা না জানিলেও ঈশ্বর যে তাহার একটী একটী সংজ্ঞা নির্দ্দিষ্ট করিয়াছেন ইহা নিশ্চিত। উক্ত ঈশ্বরনির্দ্দিষ্ট সংজ্ঞাদ্বারা বিজ্ঞ ব্যক্তিমাত্রেরই তদ্বিষয়ে বোধ হইয়া থাকে বলিয়া প্রতিবস্তুরই পদশক্যত্ব রহিয়াছে। অন্ততঃ বস্তু প্রভৃতি শব্দদ্বারা যখন জাগতিক সমস্ত বস্তুরই প্রতীতি হয়, তখন অভিধেয়ত্ব যে সকল পদার্থেই আছে, ইহা বুঝিতে আর অধিক আয়াস হইবে কেন ?

জ্ঞেয়ত্ব জ্ঞানবিষয়ত্ব, সমস্ত বস্তুই অন্ততঃ সর্ব্বজ্ঞ ঈশ্বরের জ্ঞানবিষয়ীভূত হইয়া থাকে, অতএব সকল পদার্থেই জ্ঞানবিষয়ত্ব আছে। এইরূপ অপরাপর কতকগুলি ধর্ম্মও সকল পদার্থে থাকে, যথা—গগনাভাব আত্মাভাব ইত্যাদি। গগন ও আত্মা প্রভৃতি বিভুপদার্থ অবৃত্তি, অর্থাৎ ইহারা কোথাও থাকে না, এইজন্য তাহার অভাব সর্ব্বত্রই আছে। ঐরূপ মেয়ত্ব বা যথার্থজ্ঞানবিষয়ত্ব প্রভৃতি ধর্ম্মও সর্ব্বপদার্থের ধর্ম্ম, কারণ ঈশ্বরের সর্ব্বপদার্থ বিষয়ে যথার্থ-জ্ঞান বহুতন্ত্রসিদ্ধ। এইরূপ নিত্যদ্রব্যভিন্ন সকল পদার্থে আশ্রিতত্ব বা আধেয়ত্ব ধর্ম্ম আছে। কাল কালিক সম্বন্ধে সকল বস্তুর আধার হয় এই নিয়ম রক্ষা করিবার জন্য নিত্যদ্রব্য কালিক সম্বন্ধে কালের আধেয় বলিয়া স্বীকৃত হইলেও প্রকৃতস্থলে কালিক সম্বন্ধ ভিন্ন অপর সম্বন্ধে আশ্রিতত্ব বলায় দোষ হইল না। নিত্যদ্রব্য অন্য কোনও সম্বন্ধে কোথাও থাকে না। অবৃত্তি নিত্যদ্রব্য সম্বন্ধী হয় বটে, কিন্তু আধেয় হয় না, কাজেই আশ্রিতত্ব অর্থ আধেয়ত্ব করা হইয়াছে। আধেয়ত্ব ও সম্বন্ধিত্ব এক পদার্থ নহে, অবৃত্তি পদার্থে সম্বন্ধিত্ব থাকে, আধেয়ত্ব অর্থাৎ বৃত্তিত্ব থাকে না।

দ্রব্যাদি পঞ্চ পদার্থের সমবায়িত্ব অর্থাৎ সমবেতবৃত্তি ভাববিভাজক ধর্ম্মবত্ত্ব সাধর্ম্ম্য। দ্রব্য গুণ কর্ম্ম সামান্য ও বিশেষ এই পাঁচটী পদার্থ সমবেত অর্থাৎ সমবায় সম্বন্ধে বৃত্তিমৎ, তাহাতে বর্ত্তমান ভাববিভাজক ধর্ম্ম দ্রব্যত্ব গুণত্ব কর্ম্মত্ব সামান্যত্ব ও বিশেষত্ব। সমবায়পদার্থ সমবেত নহে, অতএব সমবায়ত্ব সমবেতবৃত্তি ভাববিভাজক ধর্ম্মও নহে, এইহেতু অব্যাপ্তি বা অতিব্যাপ্তির আশঙ্কা নাই। সমবায়িত্বপদের যথাশ্রুত অর্থ সমবায়ানুযোগিত্ব, উক্ত অর্থ থাকিলে উহা সামান্য ও বিশেষের সাধর্ম্ম্য হইতে পারে না, কারণ সামান্য ও বিশেষ পদার্থে কোনও বস্তু সমবায় সম্বন্ধে না থাকায় উহাতে সমবায় সম্বন্ধের অনুযোগিত্ব নাই। সমবায়ের প্রতিযোগিত্ব অর্থ করিলেও নিত্যদ্রব্য কোথায়ও সমবায় সম্বন্ধে না থাকায় সমবায়ের প্রতিযোগিত্ব উহাতে অসম্ভব হওয়ায় উহা নিত্যদ্রব্যের সাধর্ম্ম্য হইতে পারে না, কিন্তু উক্তরূপ বিশিষ্ট অর্থ আশ্রয় করায় কোনও স্থলেই ক্ষতি হইল না। কেহ বলেন যে উহার অর্থ সমবায়ে অবৃত্তিধর্ম্মবদ্ভাবত্ব। সমবায়ে সমবায়াবৃত্তি ধর্ম্ম থাকে না ও অভাবে ভাবত্ব থাকে না কাজেই সমবায় ও অভাবে অতিব্যাপ্তি নাই।

দ্রব্যাদি পঞ্চ পদার্থের আবার অনেকত্ব অর্থাৎ অনেকবৃত্তি ভাববিভাজকধর্ম্মবত্ত্ব সাধর্ম্ম্য। যথাশ্রুত অনেকত্ব সাধর্ম্ম্য বলা যায় না, কারণ দ্রব্যাদি ব্যক্তিভেদে পৃথক্ পৃথক্ বলিয়া কোনও ব্যক্তিতেই অনেকত্ব থাকে না, অতএব অসম্ভব দোষই হইয়া পড়ে। কিন্তু অনেকবৃত্তিভাববিভাজক ধর্ম্ম অর্থ করায় যে ভাববিভাজক ধর্ম্ম একাতিরিক্ত বস্তুতে থাকে তদ্বত্ত্ব ইহাই পর্য্যবসিত অর্থ পাওয়া যায়, তাহাতে প্রকৃতস্থলে দ্রব্যত্বাদিরূপ অনেকবৃত্তি ভাববিভাজক ধর্ম্ম লইয়াই প্রত্যেকের সাধর্ম্ম্য সঙ্গত হয়। সমবায়ত্ব ভাববিভাজক ধর্ম্ম হইলেও উহা একমাত্র সমবায়ে থাকে বলিয়া সমবায়ে অতিব্যাপ্তি হইল না। অভাবত্ব অনেকবৃত্তি ধর্ম্ম হইলেও উহা ভাববিভাজক নহে বলিয়াই অভাবে অতিব্যাপ্তি হইল না।

গুণাদিপদার্থের নির্গুণত্ব ও নিষ্ক্রিয়ত্ব সাধর্ম্ম্য। নির্গুণত্ব অর্থাৎ গুণবদবৃত্তিধর্ম্মবত্ত্ব, যে ধর্ম্ম গুণবান্ পদার্থে বর্ত্তমান হয় না তদ্বত্ত্ব। উক্ত অর্থের অনুসরণ করায় দ্রব্যে উৎপত্তি ক্ষণে গুণ না থাকিলেও দ্রব্যে অতিব্যাপ্তি হইল না। কারণ পরক্ষণেই দ্রব্যে গুণ উৎপন্ন হয় বলিয়া দ্রব্যে যে সকল ধর্ম্ম থাকে সকলই গুণবদ্বৃত্তি গুণবদবৃত্তি কোন ধর্ম্মই নহে। নিষ্ক্রিয়ত্ব অর্থ ক্রিয়াবদবৃত্তি ভাব-

বিভাজক ধর্ম্মবত্ত্ব, অর্থাৎ যে ধর্ম্ম ক্রিয়াবান্ পদার্থে অর্থাৎ দ্রব্যে বর্ত্তমান হয় না তদ্বত্ত্ব। উক্ত অর্থের অনুসরণ করায় বিভুদ্রব্য ক্রিয়াশূন্য হইলেও ক্ষতি হইল না, কারণ উহাতে ক্রিয়া না থাকিলেও ক্রিয়াবতে অবৃত্তি কোনও ভাববিভাজক ধর্ম্ম নাই। ভাববিভাজক ধর্ম্মের মধ্যে একমাত্র দ্রব্যত্বই বিভুদ্রব্যে থাকে, উহা মূর্ত্ত দ্রব্যেও থাকে বলিয়া ক্রিয়াবতে অবৃত্তি হয় না। ক্রিয়াবতে অবৃত্তি ভাববিভাজক ধর্ম্ম গুণত্বাদি, উহা বিভুদ্রব্যে নাই, অতএব উক্ত অতিব্যাপ্তি বারিত হইল।

দ্রব্য গুণ ও কর্ম্ম এই তিন পদার্থে সত্তানামক জাতির সম্বন্ধ থাকে এবং উহাতেই বৈশেষিকদর্শনের মতানুসারে অর্থশব্দবাচ্যত্ব থাকে। বৈশেষিক মতে কণাদ ঋষি দ্রব্য গুণ ও কর্ম্ম এই তিন পদার্থেরই অর্থশব্দপরিভাষা করিয়াছেন।

সামান্যবিশেষবত্ত্ব, অর্থাৎ দ্রব্যত্বাদিরূপ সামান্য ও বিশেষাত্মক ধর্ম্মবত্ত্বও উহার সাধর্ম্ম্য। অদৃষ্টজনকভাবত্বও উক্ত ত্রিতয়ের সাধর্ম্ম্য। ভাষ্যোক্ত ধর্ম্মাধর্ম্মপদ সামান্যতঃ অদৃষ্ট অর্থে উক্ত হইয়াছে, অন্যথা একমাত্র ধর্ম্ম বা অধর্ম্মের জনক পদার্থে ধর্ম্মাধর্ম্ম উভয়জনকতা না থাকায় অব্যাপ্তি হইয়া পড়ে। অদৃষ্টরূপ অর্থ গ্রহণ করিলে ধর্ম্ম বা অধর্ম্ম যে কোনও একটী মাত্র অদৃষ্টের জনকপদার্থেও অদৃষ্টজনকত্ব থাকায় দোষ হইল না। জগদীশটীকা প্রভৃতি বিশদভাবে আলোচনা করিলে এতৎসম্বন্ধে আরও রহস্য জানা যাইবে।

দ্রব্যাদি তিনটী পদার্থের মধ্যে যে যে দ্রব্য গুণ ও কর্ম্মের কারণ আছে, তাহাদের কার্য্যত্ব ও অনিত্যত্ব সাধর্ম্ম্য। জগদীশ উক্ত কার্য্যত্ব সমবায়সম্বন্ধাবচ্ছিন্ন জন্যত্ব বলিয়া ব্যাখ্যা করিয়াছেন। তাহা না হইলে ধ্বংসরূপ অভাবেও কার্য্যত্ব থাকায় অতিপ্রসঙ্গ হইয়া পড়ে। অনিত্যত্ব অর্থ বিনাশিভাবত্ব। কেবল বিনাশিত্ব বলিলে প্রাগভাবে অতিব্যাপ্তি হয়, অথবা কেবল ভাবত্ব বলিলেও নিত্যদ্রব্যাদিতে অতিব্যাপ্তি হইতে পারে।

পারিমাণ্ডল্যাদিভিন্ন অপর পদার্থের নিমিত্তকারণভিন্নকারণত্ব সাধর্ম্ম্য। পারিমাণ্ডল্যাদি এই স্থলে আদিপদে দ্ব্যণুকপরিমাণ পরমমহৎপরিমাণ ও আত্মবিশেষগুণের গ্রহণ করা হইয়াছে। ইচ্ছাদি কার্য্যের প্রতি জ্ঞানাদি নিমিত্তকারণ, নিমিত্তকারণভিন্নকারণ নহে; অতএব তাহাতে কারণত্বরূপ সামান্য ধর্ম্ম থাকিলেও ক্ষতি হয় নাই। কিরণাবলীগ্রন্থে উদয়নাচার্য্য কারণত্বপদে জ্ঞাতা বা আত্মার ধর্ম্মভিন্ন অপর কার্য্যের প্রতি কারণত্ব এই অর্থ করিয়া উক্ত দোষ বারণ করেন।

নিত্যদ্রব্যভিন্নের দ্রব্যাশ্রিতত্ব সাধর্ম্ম্য। উক্ত দ্রব্যাশ্রিতত্ব সমবায়সম্বন্ধে দ্রব্যবৃত্তিসত্ত্ব। পরমাণুরূপ নিত্যদ্রব্য সংযোগসম্বন্ধে আশ্রিত এই মতেও তাহার সমবায় সম্বন্ধে আশ্রিতত্ব না থাকায় ক্ষতি হইল না। সামান্য ও বিশেষ সমবায়-সম্বন্ধে দ্রব্যাশ্রিত হইলেও তাহাতে সত্তা নামক জাতি না থাকায় অতিব্যাপ্তি হইল না।

সামান্যাদি ত্রিতয়পদার্থের স্বাত্মবত্ত্ব অর্থাৎ স্বরূপসত্ত্ব সাধর্ম্ম্য। কেহ বলেন যে, স্বাত্মবত্ত্ব ইহার অভিপ্রায় সত্তাজাতিশূন্যত্ব। দ্রব্যাদি ছয়টী ভাব পদার্থের মধ্যে প্রথম দ্রব্যাদি তিনটী পদার্থে সত্তা জাতি আছে, অপর তিনটী পদার্থে সত্তা জাতি নাই।

ঐরূপ বুদ্ধিলক্ষণত্ব বুদ্ধিমাত্রজনকত্ব বা বুদ্ধ্যন্যভাবজনকাবৃত্তি ভাববিভাজক-ধর্ম্মবত্ত্ব, অর্থাৎ যে ভাববিভাজকধর্ম্ম জ্ঞানভিন্ন কোনও ভাবপদার্থের কারণে বর্ত্তমান হয় না, তাদৃশধর্ম্মবত্ত্বও উক্ত সামান্যাদিত্রিতয়ের সাধর্ম্ম্য।

সামান্যাদি বুদ্ধির প্রতি কারণ হইলেও উহা বুদ্ধিভিন্নভাব কার্য্যের জনক নহে, অতএব অসম্ভব হইল না। দ্রব্যাদিতে দ্রব্যত্বাদিরূপ ভাববিভাজক ধর্ম্ম থাকিলেও উহা বুদ্ধ্যন্যভাবজনকাবৃত্তি নহে, কাজেই দ্রব্যাদিতে অতিব্যাপ্তি হয় না।

সামান্য অনুগত বুদ্ধির প্রতি বিষয়রূপে, বিশেষপদার্থ ব্যাবৃত্তবুদ্ধির প্রতি লিঙ্গ-রূপে ও সমবায় প্রত্যক্ষবুদ্ধির প্রতিই সন্নিকর্ষরূপে কারণ হয়। কিন্তু দ্রব্যাদি বুদ্ধি-ভিন্ন দ্রব্যাদির প্রতিও কারণ হইয়া থাকে।

অকার্য্যত্বও উহার সাধর্ম্ম্য। অকার্য্যত্ব অর্থ প্রাগভাবের প্রতিযোগী পদার্থে অবৃত্তি ভাববিভাজক ধর্ম্মবত্ত্ব। উক্ত অর্থের অনুসরণ করায় নিত্য দ্রব্য বা নিত্য-গুণে অকার্য্যত্ব অর্থাৎ কার্য্যত্বাভাব থাকিলেও উক্ত পদার্থে যে দ্রব্যত্ব ও গুণত্বরূপ ভাববিভাজক ধর্ম্ম আছে, তাহা প্রাগভাবের প্রতিযোগী অনিত্য দ্রব্য ও গুণেও বৃত্তি হওয়ায় অতিব্যাপ্তি হইল না।

ঐরূপ অকারণত্বও উহার সাধর্ম্ম্য। অকারণত্ব অর্থ নিমিত্তকারণতাভিন্ন-কারণতাশূন্যভাবত্ব। উক্ত অর্থের অনুসরণ করায় সামান্যাদিতে জ্ঞানাদির নিমিত্ত-কারণতা থাকিলেও ক্ষতি হইল না। প্রাগভাব প্রতিযোগীর নিমিত্ত কারণ, সমবায়ি বা অসমবায়ি কারণ নহে, তাহা হইলেও উহাতে ভাবত্ব না থাকায় অতিব্যাপ্তি হয় না।

ঐরূপ অসামান্যবিশেষবত্বও উহার সাধর্ম্ম্য। অসামান্যবিশেষবত্ব অর্থ সত্তার ন্যূনবৃত্তিজাতিশূন্যত্ব। পূর্ব্বেই সত্তাজাতিশূন্যত্বের কথা বলা হইয়াছে, সম্প্রতি সত্তা জাতির ন্যায় উহাতে যে সত্তার অবান্তর জাতিও নাই ইহাই বলা হইতেছে।

নিত্যত্বও উহার সাধর্ম্ম্য। নিত্যত্ব অর্থাৎ বিনাশী পদার্থে অবৃত্তি ভাববিভাজকধর্ম্মবত্ব। উক্ত অর্থের অনুসরণ করায় নিত্যদ্রব্যাদিতে অতিব্যাপ্তি হইবে না, কারণ দ্রব্যত্বাদিরূপ ভাববিভাজক নিত্যদ্রব্যাদিবৃত্তি ধর্ম্ম বিনাশী দ্রব্যাদিতে অবৃত্তি নহে। অত্যন্তাভাবত্বাদি বিনাশ্যবৃত্তি হইলেও উহা ভাববিভাজক নহে।

এই রূপ সামান্যাদির অর্থশব্দানভিধেয়ত্ব সাধর্ম্ম্য। বৈশেষিক মতে অর্থশব্দ দ্রব্য গুণ ও কর্ম্ম এই তিন অর্থেই পরিভাষিত, সামান্যাদি তাহার বাচ্য নহে। অতএব বৈশেষিকনিয়মেই উহাতে অর্থশব্দানভিধেয়ত্ব থাকে, উহা মতান্তরসাধারণ নহে।

ভাষ্যস্থিত চকারদ্বারা জন্যাবৃত্তি ভাববিভাজক ধর্ম্মবত্ব প্রভৃতি ধর্ম্মেরও গ্রহণ করা হইয়াছে।

ঐরূপ কর্ম্মভিন্নসত্ব দ্রব্য ও গুণের সাধর্ম্ম্য, সামান্য ও বিশেষের জাতিশূন্যসমবেতত্ব, কর্ম্মের দ্রব্যগুণভিন্নসত্ব, দ্রব্যের গুণকর্ম্মভিন্নসত্ব ইত্যাদি সাধর্ম্ম্যও বলা যাইতে পারে।

---

## প্রশস্তপাদভাষ্যম্

পৃথিব্যাদীনাং নবানামপি দ্রব্যত্বযোগঃ স্বাত্মন্যারম্ভকত্বং গুণবত্ত্বং কার্য্যকারণাবিরোধিত্বম্। অন্ত্যবিশেষবত্ত্বম্ অনাশ্রিতত্বনিত্যত্বে চান্যত্র অবয়বিদ্রব্যেভ্যঃ। পৃথিব্যুদকজ্বলনপবনাত্মমনসামনেকত্বাপরজাতিমত্ত্বে। ক্ষিতিজলজ্যোতিরনিল-

**मनसां क्रियावत्त्वमूर्त्तत्वपरत्वापरत्ववेगवत्त्वानि। आकाशकालदिगात्मनां सर्व्वगतत्वं परममहत्त्वं सर्व्वसंयोगिसमानदेशत्वञ्चेति।**

[ द्रव्यगुणयोः सजातीयारम्भकत्वं साधर्म्यम्—१अ—१आ—९सू। द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरम्—१अ—१आ—१०सू। न द्रव्यं कार्य्यं कारणञ्च बधति—१अ—१आ—१२सू। क्रियागुणवत समवायिकारणमिति द्रव्यलक्षणम्—१अ—१आ—१५सू। द्रव्यगुणकर्म्मणां द्रव्यं कारणं सामान्यम्—१अ—१अ—१८सू। पृथिव्यापस्तेजोवायुराकाशं कालो दिगात्मा मन इति द्रव्याणि—१अ—१आ—५सू। कारणमिति द्रव्ये कार्य्यसमवायात्—१०अ—२आ—१सू। संयोगाद्वा—१०—२आ—२सू। नोदनाभिघातात् संयुक्तसंयोगाच्च पृथिव्यां कर्म्म—५अ—२आ—१सू। तद्विशेषेणादृष्टकारितम्—५अ—२आ—२सू। अपां संयोगाभावे गुरुत्वात् पतनम्—५अ—२आ—३सू। द्रवत्वात् स्यन्दनम्—५अ—२आ—४सू। नाड्यो वायुसंयोगादारोहणम्—५अ—२आ—५सू। नोदनापीडनात् संयुक्तसंयोगाच्च—५अ—२आ—६सू। वृक्षाभिसर्पणमित्यदृष्टकारितम् ५अ—२आ—७सू। पृथिवीकर्म्मणा तेजःकर्म्म वायुकर्म्म च व्याख्यातम्—५अ—२आ—१२सू। अग्नेरूर्द्ध्वज्वलनं वायोस्तिर्य्यक्पवनमणूनां मनसश्चाद्यं कर्म्मादृष्टकारितम्—५अ—२आ—१३सू। हस्तकर्म्मणा मनसः कर्म्म व्याख्यातम्—५अ—२आ—१४सू। अपसर्पणमुपसर्पणमशितपीतसंयोगाः कार्य्यान्तरसंयोगाश्चेत्यदृष्टकारितानि—५अ—२आ—१७सू। एकदिक्काभ्यामेककालाभ्यां सन्निकृष्टविप्रकृष्टाभ्यां परमपरञ्च—७अ—२आ—२१सू। कारणपरत्वात् कारणापरत्वाच्च—७अ—२आ—२२सू। कर्म्मभिः कर्म्माणि—७अ—२आ—२४सू। गुणैर्गुणाः—७अ २आ—२५सू। इत्येतान्यालम्बनसूत्राणि ]।

---

## जगदीशसूक्तिः

सम्प्रति द्रव्याणामेव वैधर्म्यमाह पृथिव्यादीनामिति। द्रव्यत्वयोगो द्रव्यत्वसमवायः। द्रव्यत्वस्य पत्ततावच्छेदकत्वेनोपत्तयात् न तस्य स्वातन्त्र्येणोल्लेखः। स्वात्मन्यारम्भकत्वं स्वसमवेतकार्य्यजनकत्वम्। गुणवत्त्वं गुणसमवायित्वं नातः स्पन्दादावतिव्याप्तिः। कार्य्यकारणाविरोधित्वं स्वजन्यसंयोगकारणकविभागजनकत्वम्। संयोगविभागकर्म्मणां वारणाय कारणकान्तम्। अन्त्येति पृथिव्यादीनां नवानाम् अवयविद्रव्येभ्योऽन्यत्र अन्त्यविशेषवत्त्वम् उभयासमवेतनिःसामान्यधर्म्मसमवायित्वमित्यर्थः। अनाश्रितत्वम् असमवेतद्रव्यत्वम्। नित्यत्वमविनाशिद्रव्यत्वम्। चकारात् नित्यपरिमाणवत्त्वाद्युपग्रहः।

पृथिव्युदकेति—ज्वलनोऽत्र तेजोमात्रं, न तु वह्निरेव। अनेकत्वं बहुसमवेतद्रव्यविभाजकधर्म्मवत्त्वम्। अपरजातिमत्त्वं द्रव्यत्वन्यूनवृत्तिजातिमत्त्वम्। क्षितीत्यादि—क्रियावत्त्वं क्रियावद्वृत्तिद्रव्यत्वाव्यापकजातिमत्त्वम्। नातो निष्क्रियनष्टघटाद्यव्याप्तिः। मूर्त्तत्वं परिच्छिन्नपरिमाणवत्त्वम्, स्पन्दसमवायिकारणतावच्छेदकतया सिद्धो जातिप्रभेदो वा। परत्वं परत्ववद्वृत्तिद्रव्यत्वाव्यापकजातिमत्त्वम्। एवमपरत्ववेगयोरपि अर्थो बोध्यः। आकाशेत्यादि—स्वावयवावच्छेद्यावयविसंयोगाश्रयत्वं परममहत्त्वं स्वानाश्रययावन्महत्त्वापेक्षिकोत्कर्षवन्महत्त्वम्। परममहत्त्वत्वस्य जातित्वपत्ते तु तादृशजातिमन्महत्त्वमित्यर्थः। सर्व्वेति—सर्व्वेषां मूर्त्तानां संयोगिसंयुक्तत्वमित्यर्थः।

---

## सूक्तिदीपिका

द्रव्यत्वसमवाय इति—ननु द्रव्यत्वस्यैव पृथिव्यादिनवद्रव्य-साधर्म्यात्व-सम्भवे किमिति द्रव्यत्वयोग इत्यस्य द्रव्यत्वसमवाय इत्यर्थानुसन्धानमित्या-काङ्क्षायामाह द्रव्यत्वस्येत्यादि। तथाहि पक्षतावच्छेदकतयैव द्रव्यत्वस्य लाभेन द्रव्यत्ववत्त्वं तत एव साधर्म्यं लब्धमत एव द्रव्यत्ववत्त्वस्य पुनः साधर्म्यात्वकथनं निराकाङ्क्षं स्यादित्यर्थान्तरानुसरणमिति भावः।

स्वसमवेतेत्यादि—जनकत्वमिति समवायिकारणत्वमिति वस्तुगतिः, स्वसमवेतकार्यं प्रति स्वस्य तदितरकारणत्वाभावात्।

गुणसमवायित्वमिति गुणसमवायानुयोगित्वमित्यर्थः। समवायसम्बन्धेन गुणाधिकरणत्वं वा। अन्यथा कालिकसम्बन्धेन स्पन्दस्य गुणवत्त्वादतिव्याप्तिः स्यादिति।

अवयविद्रव्येभ्योऽन्यत्वेति—निरवयवद्रव्याणामेव अन्त्यविशेषवत्त्वमित्यर्थः। उभयेत्यादि—उभयासमवेतो यो निःसामान्यो धर्म्मः 'तत्समवायित्वमित्यर्थः। उभयासमवेतत्वञ्च स्वप्रतियोगिसमवेतत्व-स्वानुयोगिसमवेतत्वोभयसम्बन्धेन भेदविशिष्टान्यत्वम्। निःसामान्यत्वञ्च सामान्यशून्यत्वम्, अन्त्यविशेषाणां प्रति-व्यक्ति भिन्नतया कस्याश्चिदपि जातेस्तद्वृत्तित्वाभावेन च तेषां उभयासमवेतत्वं निःसामान्यधर्म्मत्वञ्चेति तादृशधर्म्मसमवायित्वं निरवयवद्रव्याणामव्याहतमेव। असमवेतेत्यादि—वृत्तित्वसामान्याभावार्थकस्य अनाश्रितत्वमात्रस्योपन्यासे कालि-केन निरवयवद्रव्याणामपि सर्व्वाधारभूतकालवृत्तितया अव्याप्त्यापत्ति-रिति प्रतियोगिविधया समवायसम्बन्धावच्छिन्नवृत्तित्वानुसरणम्, तेन निर-वयवद्रव्याणां कालिकसम्बन्धावच्छिन्नवृत्तित्वसत्त्वेऽपि निरुक्तसंसर्गकवृत्तित्वा-भावान्न क्षतिः।

नित्यत्वमित्यादि—प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वस्य नित्यलक्षणत्वप्रसिद्धावपि सत्यन्तदलनिवेशे प्रयोजनविरहात् गौरवाच्च अवि-नाशीत्येतन्मात्रमुपात्तम्। ध्वंसे अतिव्याप्तिवारणाय द्रव्येति। चकारादित्यादि —अनित्यद्रव्ये अतिव्याप्तिवारणाय नित्येति परिमाणविशेषणम्।

ज्वलनोऽवेत्यादि—ज्वलनशब्दस्य योगमुपादाय मुख्यार्थो वह्निरेव, स्ववृत्ति-

तेजस्त्ववत्त्वादिसम्बन्धेन पुनर्लक्ष्यार्थः तेजोमात्रम्, तथाविधार्थानुसरणे निरुक्तानेकत्वादिधर्म्माणां वह्न्यतिरिक्ततेजसि सुवर्णादावपि सत्त्वेन पृथिव्यादिभिन्नावृत्तित्वरूपपृथिव्यादिवैधर्म्म्यत्वानुपपत्तेरिति भावः (१)। सिद्धान्ते तु ज्वलनपदेन सुवर्णादीनामपि लाभात् न क्षतिशङ्कापि।

अनेकत्वमित्यादि—अनेकत्वस्य बहुसमवेतधर्म्मवत्त्वरूपत्वे द्रव्यत्वादिकमादाय आकाशादिवये गुणादौ चातिव्याप्तिरिति द्रव्यविभाजकत्वं धर्म्मविशेषणम्। द्रव्यवृत्तित्वमात्रानुसरणे पदार्थत्वादिकमादायातिव्याप्तितादवस्थ्यं, द्रव्यसमवेतत्वानुसरणेऽपि द्रव्यसमवेतसत्ताख्यसामान्यमादाय तथा। आकाशकालदिशां प्रत्येकमाकाशत्वाद्येकैकमात्रवृत्तिद्रव्यविभाजकधर्म्मवत्त्वेन द्रव्यविभाजकधर्म्मवत्त्वमात्रोक्तौ तत्रातिव्याप्तिरिति बहुसमवेतत्वं धर्म्मविशेषणम्। यद्यपि तादृशधर्म्मवत्त्वस्य समवायसम्बन्धेन विवक्षणे न निरुक्तातिव्याप्तिः द्रव्यविभाजकानामाकाशत्वकालत्वदिक्त्वानाम् उपाधिविशेषरूपाणां समवायसम्बन्धावच्छिन्नवृत्तित्वविरहादिति विभाव्यते, तथापि तादृशवृत्तित्वलाभायैव तदिति ध्येयम्।

द्रव्यत्वन्यूनवृत्तीति—द्रव्यत्वसामानाधिकरण्ये सति द्रवत्ववद्वृत्त्यभावप्रतियोगित्वमित्यर्थः। गुणत्वादिकमादाय गुणादावतिव्याप्तिवारणाय सत्यन्तम्। सत्तान्यूनवृत्तिद्रवत्वगुणत्वादिकमादाय आकाशादौ गुणादौ च अतिव्याप्तितादवस्थ्यमिति न्यूनवृत्तित्वे द्रवत्वनिरूपितत्वविशेषणम्। अत्र सामानाधिकरण्यघटकीभूतं वृत्तित्वं विशेष्यदलीय-प्रतियोगित्वञ्च समवायेन वक्तव्यं; नातः गुणत्वादेरपि सम्बन्धविशेषेण द्रवत्वसामानाधिकरण्यस्य सम्बन्धान्तरेण च तादृशप्रतियोगित्वस्य सत्त्वेऽपि अतिप्रसङ्गस्तदवस्थ इति ध्येयम्।

क्रियावदित्यादि—द्रवत्ववद्वृत्तिभेदप्रतियोगितावच्छेदकत्वादिपर्य्यवसितस्य द्रवत्वाव्यापकत्वस्य गुणत्वादावपि सत्त्वेन अतिप्रसङ्गवारणाय क्रिया-

---

(१) जगदीशेन तदितरावृत्तित्वरूपमेव वैधर्म्म्यत्वं प्रकृते अभिप्रेतं, न तु 'यदुक्तं यस्य साधर्म्यं वैधर्म्यमितरस्य तत्' इति विश्वनाथाद्यभिमतं तदवृत्तित्वरूपं, तथात्वे द्रव्यत्वयोगादेः जगदीशोक्तद्रव्यवैधर्म्यतासूचणासङ्गतेः। वक्ष्यते चैवं स्वयमेवाग्रे।

বদ্বৃত্তীতি জাতিবিশেষণম্। বৃত্তিত্বঞ্চ সমবায়সম্বন্ধাবচ্ছিন্নং বিবক্ষিতম্, অন্যথা গুণত্বাদেরপি কালিকেন ক্রিয়াবদ্বৃত্তিতয়া তথৈবাতিপ্রসঙ্গাপাতাত্।

নিষ্ক্রিয়েত্যাদি—উত্পন্নবিনষ্টঘটাদীত্যর্থঃ। অব্যাপ্তিরিতি ঘটবৃত্তি-গুণক্রিয়াদৌ ঘটাদেঃ সমবায়িকারণত্বেন গুণক্রিয়াদ্যুত্পত্তিপূর্ব্ববর্ত্তিত্বস্য অবশ্যমভ্যুপগন্তব্যতয়া আদ্যক্ষণে ঘটাদৌ গুণক্রিয়াদ্যুত্পত্তেরভ্যুপগন্তুমশক্য-ত্বাত্, অনন্তরক্ষণে চ আশ্রয়স্যৈব অভাবেন ক্রিয়াবত্ত্বলক্ষণস্য তত্র বিরহা-দিতি ভাবঃ।

জাতিপ্রভেদো বেতি—বাকারোঽনাস্থায়াং, তদ্বীজন্তু সাঙ্কর্য্যস্য জাতি-বাধকতায়া অভ্যুপগমাত্ ভূতত্বনিরূপিতসাঙ্কর্য্যস্য মূর্ত্তত্বে সত্ত্বেন জাতিত্বস্য স্বীকর্ত্তুমশক্যত্বাদিতি ভাবঃ।

পরত্বেত্যাদি—অত্রাপি পূর্ব্ববদ্ব্যাবৃত্তিরনুসন্ধেয়া। এবমিতি—অত্রাপি পূর্ব্ববত্ অপরত্ববদ্বৃত্তিদ্রব্যত্বাব্যাপকজাতিমত্ত্বং বেগবদ্বৃত্তিদ্রব্যত্বাব্যাপক-জাতিমত্ত্বঞ্চ অর্থো বোধ্য ইত্যর্থঃ। ব্যাবৃত্তিরপি পূর্ব্ববদেব।

## ভাষ্যতাৎপর্য্য

সম্প্রতি দ্রব্য সমূহের বৈধর্ম্ম্য বলা হইতেছে। [ইতরাবৃত্তিধর্ম্মকেই প্রকৃত-স্থলে জগদীশ বৈধর্ম্ম্য বলিয়া গ্রহণ করিয়াছেন। উহা ফলতঃ সাধর্ম্ম্য অর্থেই পর্য্যবসিত হয়।] যথা—পৃথিবী প্রভৃতি নয়টী দ্রব্যের দ্রব্যত্বযোগ বা দ্রব্যত্ব-সমবায় আছে, অন্য বস্তুতে দ্রব্যত্বসমবায় থাকে না। পক্ষরূপে দ্রব্যের নির্দ্দেশ করাতেই দ্রব্যত্ব তাহার বৈধর্ম্ম্য পাওয়া গিয়াছে, এই জন্যই এস্থলে দ্রব্যত্বকে বৈধর্ম্ম্য না বলিয়া দ্রব্যত্বের সমবায়কে বৈধর্ম্ম্য বলা হইয়াছে। ঐরূপ স্বসমবেতকার্য্যের কারণত্ব অর্থাৎ সমবায়িকারণত্ব নয়টী দ্রব্যেরই বৈধর্ম্ম্য। সমবায় সম্বন্ধে গুণাশ্রয়ত্ব বা গুণসমবায়ানুযোগিত্ব উহার বৈধর্ম্ম্য, স্পন্দাত্মককালাদিতে কালিক সম্বন্ধে গুণ থাকে, সমবায় সম্বন্ধে থাকে না, অতএব কালিকসম্বন্ধে গুণবত্ত্ব ধরিয়া অতিপ্রসঙ্গ হইল না। এইরূপ কার্য্যকারণাবিরোধিত্ব অর্থাৎ স্বজন্যসংযোগজন্যবিভাগের জনকত্ব উহার বৈধর্ম্ম্য। কেবলমাত্র বিভাগ-

জনকত্ব বলিলে সংযোগ বিভাগ ও কর্ম্মে অতিব্যাপ্তি হয়, এই জন্য অপর অংশ বিশেষণরূপে সন্নিবেশ করা হইয়াছে।

পৃথিব্যাদি নয়টী দ্রব্যের মধ্যে যে যে দ্রব্য নিরবয়ব, তাহাতে অন্ত্যবিশেষবত্ত্ব অনাশ্রিতত্ব ও নিত্যত্বরূপ ধর্ম্ম থাকে। অন্ত্যবিশেষবত্ত্ব অর্থ উভয়ে অসমবেত যে ধর্ম্ম সামান্যশূন্য সমবায়সম্বন্ধে তদ্বত্ত্ব। অন্ত্যবিশেষপদার্থ প্রতিব্যক্তিতে পৃথক্ পৃথক্, উহা উভয়ে সমবেত নহে ও উহাতে কোনও জাতি নাই, এবং উহা নিরবয়ব দ্রব্যে সমবায় সম্বন্ধে থাকে, অতএব নিরবয়ব দ্রব্যে তাদৃশ ধর্ম্মের সমবায়িত্ব আছে, উহা অন্য পদার্থে নাই। অনাশ্রিতত্ব অর্থ অসমবেত-দ্রব্যত্ব, সামান্যতঃ আশ্রিতত্বের অভাব নহে, কারণ তাহা হইলে কালিক সম্বন্ধে কালে সর্ব্ববস্তু থাকে বলিয়া কালিকসম্বন্ধে আশ্রিতত্ব নিরবয়ব দ্রব্যেও আছে, এই জন্য সামান্যতঃ আশ্রিতত্বের অভাব তাহাতে কোনও মতেই থাকিতে না পারায় অসম্ভব হয়। অভাব ও সমবায়াদিতেও অসমবেতত্ব থাকে, এই জন্য অসমবেত দ্রব্যত্ব পর্য্যন্ত অর্থ করা হইয়াছে। নিত্যত্ব অর্থ অবিনাশিদ্রব্যত্ব। কেবল অবিনাশিত্ব উহার অর্থ করিলে ধ্বংসাভাবাদিতে অতিব্যাপ্তি হয়, এই জন্য অবিনাশিদ্রব্যত্ব পর্য্যন্ত বলা হইয়াছে। যদিও প্রাগভাবের অপ্রতিযোগী হইয়া যাহা বিনাশের অপ্রতিযোগী হয়, তাহাকেই নিত্য বলিয়া শাস্ত্রকারগণ বলিয়া থাকেন, তথাপি প্রকৃত স্থলে দ্রব্যত্ব অংশ নিবিষ্ট থাকায় দুইটী অংশ না লইলেও দোষ হয় না। উক্ত অনুভব অনুসারে অবিনাশিদ্রব্যত্বের ন্যায় অনুৎপন্নদ্রব্যত্বও বৈধর্ম্ম্য বলা যাইতে পারে। ভাষ্যগ্রন্থে চকার দ্বারা ঐ সকল ধর্ম্ম ও নিত্যপরিমাণবত্ত্ব প্রভৃতি বৈধর্ম্ম্য সূচনা করা হইয়াছে।

উক্ত নয়টী দ্রব্যের মধ্যে আবার ক্ষিতি অপ্ তেজ মরুৎ আত্মা ও মন এই কয়টী দ্রব্যের অনেকত্ব ও অপরজাতিমত্ত্বরূপ ধর্ম্ম বৈধর্ম্ম্য। অনেকত্বপদের অর্থ বহু বস্তুতে সমবায় সম্বন্ধে বর্ত্তমান দ্রব্যবিভাজক ধর্ম্মবত্ত্ব। অনেকত্ব পদের যথাশ্রুত অর্থ থাকিলে বিশেষাদিপদার্থেও অনেকত্ব থাকায় অতিব্যাপ্তি হয়। উক্ত অর্থ অনুসরণ করায় যেমন বিশেষ পদার্থ বহুসমবেত ধর্ম্মবান্ নহে ঐরূপ বিশেষ পদার্থে দ্রব্যবিভাজক ধর্ম্ম নাই বলিয়া অতিব্যাপ্তি হইল না। গুণত্বাদি ধর্ম্মও বহুবস্তুতে সমবায় সম্বন্ধে থাকে, কিন্তু উহা দ্রব্যবিভাজক ধর্ম্ম নহে, এই জন্য গুণাদিতে অতিব্যাপ্তি বারণার্থ দ্রব্যবিভাজক এই অংশ দেওয়া হইয়াছে। আকাশত্বাদি

ধর্ম্ম দ্রব্যবিভাজক হইলেও উহা বহু বস্তুতে বর্ত্তমান বা সমবেত নহে, এই জন্য বহু সমবেত এই অংশের উপাদান করা হইয়াছে। দ্রব্যবিভাজকধর্ম্মবত্ত্ব সমবায় সম্বন্ধে দ্রব্যবিভাজকধর্ম্মাধিকরণত্ব এইরূপ অর্থ করিলে আকাশাদিতে অতিব্যাপ্তি হয় না, অতএব উক্ত অর্থ লাভের জন্যই বহুসমবেত এই অংশ দেওয়া হইয়াছে বুঝিতে হইবে।

অপরজাতিমত্ত্বপদের অর্থ দ্রব্যত্ববদ্‌বৃত্তি দ্রব্যত্বাব্যাপকজাতিমত্ত্ব। গুণত্বাদি জাতিও দ্রব্যত্বের অব্যাপক বলিয়া উক্ত জাতি আদান করিয়া গুণাদিতে অতি-ব্যাপ্তি হয়, এই জন্য জাতি অংশে দ্রব্যত্ববদ্‌বৃত্তি এই বিশেষণ দেওয়া হইয়াছে। উক্ত দ্রব্যত্ববত্ত্ব ও দ্রব্যত্ববদ্‌বৃত্তিত্ব উভয়ই সমবায় সম্বন্ধে বলিতে হইবে, কাজেই কালিকসম্বন্ধে দ্রব্যত্ববত্ত্ব বা দ্রব্যত্ববদ্‌বৃত্তিত্ব ধরিয়া পূর্ব্ববৎ অতিব্যাপ্তি হইল না।

ক্রিয়াবত্ত্ব, মূর্ত্তত্ব, পরত্ববত্ত্ব, অপরত্ববত্ত্ব ও বেগবত্ত্ব; ক্ষিতি, জল, তেজ, পবন ও মন এই পঞ্চ দ্রব্যের বৈধর্ম্ম্য। ক্রিয়াবত্ত্ব পদের যথাশ্রুত অর্থ আদান করিলে প্রথম ক্ষণে উৎপন্ন হইয়া যে ঘটাদি দ্বিতীয়ক্ষণেই নষ্ট হইয়া যায়, তাহাতে ক্রিয়া উৎপন্ন না হওয়ায় ক্রিয়াবত্ত্বলক্ষণের অব্যাপ্তি হয়, তদ্বারণার্থ উক্ত বিশেষ অর্থের অনুসরণ করা হইয়াছে। দ্রব্যত্বাব্যাপকজাতিমত্ত্বমাত্র বলিলে গুণত্বাদি জাতি আদান করিয়া গুণাদিতে অতিব্যাপ্তি হয়, এই জন্য উক্ত জাতিতে ক্রিয়াবদ্‌বৃত্তি বিশেষণ দেওয়া হইয়াছে। উক্ত স্থলেও পূর্ব্ববৎ অতিব্যাপ্তি বারণের জন্য সমবায় সম্বন্ধেই ক্রিয়া-বত্ত্ব ও ক্রিয়াবদ্‌বৃত্তিত্ব প্রভৃতি বলিতে হইবে।

মূর্ত্তত্ব পদের অর্থ পরিচ্ছিন্নপরিমাণবত্ত্ব বা নিকৃষ্টপরিমাণবত্ত্ব। নয়টী দ্রব্যের মধ্যে আকাশ কাল দিক্ ও আত্মা এই চারিটী দ্রব্যের পরিমাণ পরম মহৎ অর্থাৎ সর্ব্বপরিমাণ অপেক্ষা বৃহৎ, তদ্‌ভিন্ন পাঁচটী দ্রব্যের পরিমাণ তদপেক্ষা নিকৃষ্ট, অতএব আকাশাদি চারিটী দ্রব্য ভিন্ন অপর সকল দ্রব্যেই নিকৃষ্টপরিমাণবত্ত্ব আছে। কেহ বলেন যে, মূর্ত্তত্ব স্পন্দের সমবায়িকারণতাবচ্ছেদক জাতিবিশেষ। বাস্তবিক উক্ত মত সমীচীন নহে, কারণ পূর্ব্বেই সাঙ্কর্য্যের জাতিবাধকতা বলা হইয়াছে, মূর্ত্তত্বে ভূতত্বনিরূপিত সাঙ্কর্য্য থাকায় উহা জাতি হইতে পারে না।

পরত্ববত্ত্ব অপরত্ববত্ত্ব ও বেগবত্ত্বপদের অর্থ যথাক্রমে পরত্ববদ্‌বৃত্তিদ্রব্যত্বাব্যাপক-জাতিমত্ত্ব অপরত্ববদ্‌বৃত্তিদ্রব্যত্বাব্যাপকজাতিমত্ত্ব ও বেগবদ্‌বৃত্তি দ্রব্যত্বাব্যাপক জাতিমত্ত্ব। ব্যাবৃত্তি পূর্ব্ববৎ অনুসন্ধেয়।

জনকত্ব বলিলে সংযোগ বিভাগ ও কর্ম্মে অতিব্যাপ্তি হয়, এই জন্য অপর অংশ বিশেষণরূপে সন্নিবেশ করা হইয়াছে।

পৃথিব্যাদি নয়টী দ্রব্যের মধ্যে যে যে দ্রব্য নিরবয়ব, তাহাতে অন্ত্যবিশেষবত্ব অনাশ্রিতত্ব ও নিত্যত্বরূপ ধর্ম্ম থাকে। অন্ত্যবিশেষবত্ত্ব অর্থ উভয়ে অসমবেত যে ধর্ম্ম সামান্যশূন্য সমবায়সম্বন্ধে তদ্বত্ব। অন্ত্যবিশেষপদার্থ প্রতিব্যক্তিতে পৃথক্ পৃথক্, উহা উভয়ে সমবেত নহে ও উহাতে কোনও জাতি নাই, এবং উহা নিরবয়ব দ্রব্যে সমবায় সম্বন্ধে থাকে, অতএব নিরবয়ব দ্রব্যে তাদৃশ ধর্ম্মের সমবায়িত্ব আছে, উহা অন্য পদার্থে নাই। অনাশ্রিতত্ব অর্থ অসমবেত-দ্রব্যত্ব, সামান্যতঃ আশ্রিতত্বের অভাব নহে, কারণ তাহা হইলে কালিক সম্বন্ধে কালে সর্ব্ববস্তু থাকে বলিয়া কালিকসম্বন্ধে আশ্রিতত্ব নিরবয়ব দ্রব্যেও আছে, এই জন্য সামান্যতঃ আশ্রিতত্বের অভাব তাহাতে কোনও মতেই থাকিতে না পারায় অসম্ভব হয়। অভাব ও সমবায়াদিতেও অসমবেতত্ব থাকে, এই জন্য অসমবেত দ্রব্যত্ব পর্য্যন্ত অর্থ করা হইয়াছে। নিত্যত্ব অর্থ অবিনাশিদ্রব্যত্ব। কেবল অবিনাশিত্ব উহার অর্থ করিলে ধ্বংসাভাবাদিতে অতিব্যাপ্তি হয়, এই জন্য অবিনাশিদ্রব্যত্ব পর্য্যন্ত বলা হইয়াছে। যদিও প্রাগভাবের অপ্রতিযোগী হইয়া যাহা বিনাশের অপ্রতিযোগী হয়, তাহাকেই নিত্য বলিয়া শাস্ত্রকারগণ বলিয়া থাকেন, তথাপি প্রকৃত স্থলে দ্রব্যত্ব অংশ নিবিষ্ট থাকায় দুইটী অংশ না লইলেও দোষ হয় না। উক্ত অনুভব অনুসারে অবিনাশিদ্রব্যত্বের ন্যায় অনুৎপন্নদ্রব্যত্বও বৈধর্ম্ম্য বলা যাইতে পারে। ভাষ্যগ্রন্থে চকার দ্বারা ঐ সকল ধর্ম্ম ও নিত্যপরিমাণবত্ত্ব প্রভৃতি বৈধর্ম্ম্য সূচনা করা হইয়াছে।

উক্ত নয়টী দ্রব্যের মধ্যে আবার ক্ষিতি অপ্ তেজ মরুৎ আত্মা ও মন এই কয়টী দ্রব্যের অনেকত্ব ও অপরজাতিমত্ত্বরূপ ধর্ম্ম বৈধর্ম্ম্য। অনেকত্বপদের অর্থ বহু বস্তুতে সমবায় সম্বন্ধে বর্ত্তমান দ্রব্যবিভাজক ধর্ম্মবত্ত্ব। অনেকত্ব পদের যথাশ্রুত অর্থ থাকিলে বিশেষাদিপদার্থেও অনেকত্ব থাকায় অতিব্যাপ্তি হয়। উক্ত অর্থ অনুসরণ করায় যেমন বিশেষ পদার্থ বহুসমবেত ধর্ম্মবান্ নহে ঐরূপ বিশেষ পদার্থে দ্রব্যবিভাজক ধর্ম্ম নাই বলিয়া অতিব্যাপ্তি হইল না। গুণত্বাদি ধর্ম্মও বহুবস্তুতে সমবায় সম্বন্ধে থাকে, কিন্তু উহা দ্রব্যবিভাজক ধর্ম্ম নহে, এই জন্য গুণাদিতে অতিব্যাপ্তি বারণার্থ দ্রব্যবিভাজক এই অংশ দেওয়া হইয়াছে। আকাশত্বাদি

এখন আপত্তি হইতেছে এই যে, সুবর্ণাদি তৈজসপদার্থ হইলে জারিত সুবর্ণে কি করিয়া মধুর রসাদির অনুভব হইতে পারে, রস একমাত্র পৃথিবী ও জলেই থাকে, তেজে রস নাই। তাহার উত্তর এই যে,—উহা জারিত সুবর্ণের রস নহে, পরন্তু জারিত সুবর্ণের সহিত যে পার্থিব ভাগ যুক্ত, উহা তাহারই রস। অতএব কোনও অনুপপত্তি নাই। সুবর্ণাদি তেজঃপদার্থ বলিয়াই আবহমান কাল হইতে সুবর্ণ রৌপ্য ও তাম্র-পিত্তলাদির পাত্র তৈজস পাত্র বলিয়া ব্যবহৃত হইয়া আসিতেছে।

কেহ কেহ সুবর্ণাদি ধাতু দ্রব্যকে পৃথিব্যাদি নবদ্রব্য অপেক্ষা অতিরিক্ত দ্রব্য বলিয়া থাকেন, উক্ত অনুমানদ্বারা তৈজসত্ব সিদ্ধ হওয়ায় সে সকল মত খণ্ডিত হইয়াছে।

---

### प्रशस्तपादभाष्यम्

वायुत्वाभिसम्बन्धात् वायुः। स्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्व (१)संस्कारवान्। स्पर्शोऽस्य अनुष्णाशीतत्वे सति अपाकजः। गुणविनिवेशात् सिद्धेः (२)। अरूपिषु अचाक्षुषवचनात् सप्त संख्यादयः। तृणकर्म्मवचनात् संस्कारः।

स चायं द्विविधः, अणुकार्य्यभावात्। तत्र कार्य्यलक्षणश्चतुर्व्विधः, शरीरम्, इन्द्रियं, विषयः, प्राण इति। तत्र अयोनिजमेव शरीरं मरुतां लोके पार्थिवावयवोपष्टम्भाच्चोपभोगसमर्थम्। इन्द्रियं सर्व्वप्राणिनां स्पर्शो-

---

(१) वेगवान् इति पाठान्तरम्।

(२) गुणविनिवेशाधिकारे तत्सिद्धेः इति पाठान्तरम्।

पलम्भकं पृथिव्याद्यनभिभूतैर्वाय्ववयवैरारब्धं सर्व्वशरीरव्यापि त्वगिन्द्रियम्। विषयस्तूपलभ्यमानस्पर्शाधिष्ठानभूतः स्पर्शशब्दधृतिकम्पलिङ्गः तिर्य्यग्गमनस्वभावकः मेघादिप्रेरणधारणादिसमर्थः। तस्य अप्रत्यक्षस्यापि नानात्वं सम्मूर्च्छनेनानुमीयते। सम्मूर्च्छनं पुनः समानजवयोर्विरुद्धदिक्क्रिययोर्वाय्वोः सन्निपातः। सोऽपि तृणादिगमनेनानुमितेन सावयविनोर्द्ध्वगमनेनानुमीयते। प्राणोऽन्तःशरीरे रसमलधातूनां प्रेरणादिहेतुरेकः सन् क्रियाभेदात् प्राणापानादिसंज्ञां लभत इति।

[स्पर्शवान् वायुः—२अ-१आ-४सू। अरूपिष्वचाक्षुषाणि—४अ-१आ-१२सू। तृणे कर्म्म वायुसंयोगात्—५अ-१आ-१४सू। सदकारणवन्नित्यं-४अ-१आ-१सू। तस्य कार्य्यं लिङ्गं—४अ-१आ-२सू। कारणभावात् कार्य्यभावः—४अ-१आ-३सू। अनित्य इति विशेषतः प्रतिषेधभावः—४-अ-१आ-४सू। अविद्या—४अ-१आ-५सू। अद्रव्यवत्त्वेन द्रव्यम्—२अ-१आ-११सू। क्रियावत्त्वाद् गुणवत्त्वाच्च—२अ-१आ-१२सू। अद्रव्यत्वेन नित्यत्वमुक्तम्—२अ-१आ-१३सू। तत् पुनः पृथिव्यादिकार्य्यद्रव्यं त्रिविधं शरीरेन्द्रियविषयसंज्ञकं—४अ-२आ-१सू। नित्यं परिमण्डलम्—७अ-१आ-२०सू। अविद्या च विद्यालिङ्गम्—७अ-१आ-२१सू। अनियतदिग्देशपूर्व्वकत्वात्—४अ-२आ-६सू। धर्म्मविशेषाच्च—४अ-२आ-७सू। समाख्याभावाच्च—४अ-२आ-८सू। संज्ञाया आदित्वात्—४अ-२आ-९सू। सन्त्ययोनिजाः—४अ-२आ-१०सू। वेदलिङ्गाच्च—४अ-२आ-११सू। तथापस्तेजो वायुश्च रसरूपस्पर्शाविशेषात्—८अ-२आ-६सू। स्पर्शश्च वायोः—२अ-१आ-९सू। न च दृष्टानां स्पर्श इत्यदृष्टलिङ्गो वायुः—२अ-१आ-१०सू। सामान्यतो दृष्टाच्चाविशेषः—२अ-१आ-१६सू।

सत्यपि द्रव्यत्वे महत्त्वे रूपसंस्काराभावाद्वायोरनुपलब्धिः—४अ-१आ-७सू। वायोर्वायुसम्मूर्च्छनं नानात्वलिङ्गम्—१अ-२आ-१४सू। वायुसन्निकर्षे प्रत्यक्षाभावाद्दृष्टं लिङ्गं न विद्यते—२अ-१अ-१५सू। इत्येतान्यालम्बन-सूत्राणि।]

---

## जगदीशसूक्तिः

वायुत्वेति—वायुत्वं नाम जातिभेदः। तस्याभिमतसम्बन्धं समवायमन्तर्भाव्य वायुः पक्षीकृत इति शेषः। न च तादृशजातौ मानाभावः स्पर्शविशेषस्य वह्निमात्रस्य वा जनकतावच्छेदकत्वेन तत्सिद्धेरिति भावः। वायोर्द्रव्यत्वसिद्धर्थं गुणानाह स्पर्शेत्यादि। स्पर्शवत्त्वमात्रं पृथिव्यादौ गतमत आह स्पर्शोऽस्येति। अस्य वायोः अनुष्णाशीतत्वे सति अपाकजः साधर्म्यमित्यर्थः।

अत्र अनुष्णपदेन तेजसः, अशीतपदेन जलस्य, अपाकजपदेन पृथिव्या व्युदासः। न च अवयविनां घटादीनां स्पर्शस्य पाकाजन्यत्वात्तत्रातिव्याप्तितादवस्थ्यम् अपाकजपदेन पाकजस्पर्शवद्वृत्तिद्रव्यविभाजकधर्मसमानाधिकरणस्य पृथिव्यवृत्तेर्वा विवक्षितत्वादिति भावः। स चेति निरुक्तस्पर्शश्चेत्यर्थः। वायुः स्पर्शवानिति सूत्रसिद्ध इत्यर्थः। संख्यादिषु सूत्रकारसम्मतिमाह अरूपिष्विति। अरूपिषु नीरूप-यावद्रव्येषु अचाक्षुषसंख्यादिवचनात् वायौ सप्त संख्यादयः सिद्धा इति विभक्तिव्यत्यासेनान्वयः। यद्यपि संख्यादीनां प्रत्येकं वायुभिन्ने द्रव्ये अतिप्रसक्तं, तथापि नीरूपस्पर्शवद्वृत्तित्वेन विशेषितमेव संख्यापृथक्त्वसंयोगविभागानां प्रत्येकधर्म्मवत्त्वं साधर्म्यम्। परत्वापरत्वसंस्कारास्तु नीरूपस्पर्शवद्वृत्तित्वेनैव विशेषितास्तथेत्यदोषः।

तृणेति—तृणे कर्म्म वायुसंयोगादिति सूत्रकारवचनात् संस्कार इत्यर्थः। तथाच नोदनाद्यजन्यं तृणादिकर्म वेगवद्द्रव्याभिघातजं विलक्षणक्रियात्वादित्यनुमाने तस्य तात्पर्य्यादिति भावः।

ननु यद्यसौ अणुरेव, तर्हि तदीयस्पर्शो न ग्राह्यः स्यात् अणुगत-स्पर्शस्य अतीन्द्रियत्वनियमात्। अथ अणुभिन्न एव, तदा अवयव-धारायामनवस्था अणुभिन्नमूर्त्तानां सावयवत्वनियमादत आह—स चायमिति। अयं वायुः द्विविधः अणुलक्षणः अणुभिन्नस्वरूपश्च। तत्र तयोर्मध्ये। चतस्रो विधा दर्शयति शरीरमिति ननु वायवीयदेहस्य योनिजत्वे पृथिवीत्वापत्तौ वायुत्वव्याघात इत्यत आह तत्र अयोनिज-मेवेति। तत्र वायौ शरीरमित्यग्रे तनेनान्वयः। सप्तम्यर्थः समवेतत्वं, तत्र तेषु शरीरादिषु मध्ये इत्यर्थ इत्याचार्य्याः। तादृशदेहे योग्या-नुपलब्धिबाधं निरस्यति मरुतां लोक इति। वायुत्वं शरीर-[सम-वायि-] वृत्ति द्रव्यारम्भकनित्यवृत्तिजातित्वादित्यनुमानादेव तत्र तत्-सिद्धेरिति भावः।

ननु पार्थिवान्यस्य भोगावच्छेदकस्य पार्थिवावयवोपष्टम्भत्वनियमात् तदनुपष्टब्धस्य कथं भोगावच्छेदकत्वमत आह पार्थिवेति। चोऽव-धारणे पार्थिवावयवोपष्टम्भादेवेत्यर्थः। उपभोगस्य समर्थम् अव-च्छेदकम्।

वाय्वारभ्यमिन्द्रियमाह—इन्द्रियमिति।—सर्व्वप्राणिनां पार्थिवा-प्यादिसर्व्वजातीयप्राणिनां स्पर्शग्राहकं वाय्ववयवैरारब्धं त्वगिन्द्रियं त्वगिन्द्रियसंज्ञकमित्यर्थः। कुष्ठाद्युपहतचर्म्मणां स्पर्शग्राहकेन्द्रियत्वे मानाभावादाह—पार्थिवाद्यनभिभूतैरिति। ननु त्वगिन्द्रियं यदि करचरणादीनामेकमात्राधिष्ठेयं तदान्ययुक्तदशायां घटादेः स्पार्शनं न स्यादत आह—सर्व्वशरीरव्यापीति।—सर्व्वावयवावच्छेदेन शरीरवृत्ती-त्यर्थः। केशदन्तनखलोम्नां न शरीरावयवत्वं देहादुत्तरमेव तेषामुत्-पादस्य आगमसिद्धत्वात् अतो नातिप्रसङ्गः।

विषयात्मकं वायुमाह—विषयस्त्विति।—उपलभ्यमानेति—साक्षात्-कारयोग्यस्पर्शाश्रयीभूत इत्यर्थः। तेन यस्य वायोः स्पर्शो नोपलभ्य-

मानस्तत्र नाव्याप्तिः। वृटेरपि स्पर्शः साक्षात्कारयोग्य एव महावायुत्वे वा तात्पर्य्यम्। वायोनीरूपत्वेन प्रत्यक्षासम्भवात्तत्रानुमानं मानमाह—स्पर्शेति, स्पर्शः शब्दो धृति. कम्पश्च लिङ्गानि यस्य स तथा।

तथाहि व्यजनचलनोत्तरमनुभूयमानः पृथिव्याद्यवृत्तिस्पर्शो द्रव्याश्रितः स्पर्शत्वात् घटस्पर्शवत्। एवं पत्रादेर्ममरादिशब्दः सवेगस्पर्शवद्द्रव्याभिघातजः विलक्षणशब्दत्वात् दलद्वयविभागजशब्दवत्। तथा धृतिः वेगवद्द्रव्यसंयोगप्रयुक्ता अप्राणिगुरोरपतनत्वात् नौकाद्यपतनवत्। पक्षिप्रभृतेः प्रयत्नप्रयुक्ते तदपतने न व्यभिचारः। एवमश्वत्थदलादेः कम्पः सस्पर्शवेगवद्द्रव्याभिघातजः कर्म्मविशेषत्वात् दण्डाभिहतघटादिक्रियावदित्यादिप्रयोगसम्भवादिति भावः।

तिर्य्यग्गमनेति—तिर्य्यग्गमनं स्वभावोऽस्येति। कादाचित्की तु फुत्कारादेः सरलगतिर्विशेषसामग्रीवशादिति भावः।

मेघादीति—मेघधूलिपक्षघर्म्मादीनां प्रेरणं सञ्चारो धारणं पतनाप्रतिबन्धः आदिना शैत्याद्युपलब्धः। समर्थः अनुकूल इत्यर्थः।

---

## सूक्तिदीपिका

आदौ वायुत्वजात्यसिद्धेः समवायमन्तर्भाव्येत्याद्यसङ्गतं स्यादत आह न चेत्यादि। स्पर्शविशेषस्येति अनुष्णाशीतत्वे सति अपाकजस्पर्शस्येत्यर्थः। अनुष्णाशीतत्वे सति अपाकजस्पर्शत्वस्य अर्थसमाजग्रस्ततया कार्य्यतावच्छेदकत्वासम्भवमनुसन्धाय आह वह्निमात्रस्य वेति। कारणान्तरसमवधानेऽपि निर्व्वातदेशे वह्नेरदर्शनेन वातसत्त्वे च तद्दर्शनेन अन्वयतो व्यतिरेकतश्च वह्नित्वावच्छिन्नं प्रति वायुत्वेन कारणत्वं कल्पनीयं, तत्रापि वायुत्वस्य जातित्वे लाघवमिति लाघवज्ञानसहकारेण सिद्धं वायुत्वस्य जातित्वमिति भावः। अपाकजः अपाकजः स्पर्श इत्यर्थः। व्युदास इति तेजसः स्पर्शस्य उष्णत्वात् जलस्पर्शस्य शीतत्वात् पृथिवीस्पर्शस्य पाकजत्वात् तत्र तत्र न लक्षणातिप्रसङ्गः

इति भावः। केचित्तु स्पर्शविशेषस्येत्यस्य पृथिव्यादिस्पर्शव्यावृत्तवैजात्यावच्छिन्न-स्येत्यर्थः। तादृशवैजात्यञ्च रूपवद्द्रव्यसंयोगसमानकालीनप्रत्यक्षविषयस्पर्शेषु प्रत्यक्षतः सिध्यति।

ननु अपाकजस्पर्शत्वं पाकाजन्यस्पर्शत्वं, तच्च वैशेषिकमते अवयविस्पर्शमात्रे-ष्वेव, तन्मते अवयविनि पाकस्य अस्वीकारात् तज्जन्यस्पर्शस्य अवयविनि सम्पा-दयितुमशक्यत्वात्। तदुक्तं विश्वनाथेन—'एतेषां पाकजत्वन्तु क्षितौ नान्यत्र कुत्रचित्। तत्रापि परमाणौ स्यात् पाको वैशेषिके नये।' इति एतदाकाङ्क्षाया-माह न चेत्यादि। पाकजेत्यादि—पृथिव्यामतिव्याप्तिवारणाय अवृत्त्यन्तम्। तथाच पृथिवीत्वस्य पाकजस्पर्शवति परमाणौ वृत्तित्वेन घटादिवृत्तिस्पर्शस्य पृथिवीत्वसामानाधिकरण्येऽपि पाकजस्पर्शवदवृत्तिद्रव्यविभाजकधर्मसामा-नाधिकरण्यविरहात् नातिव्याप्तिरिति भावः। लाघवमभिप्रेत्याह पृथिव्य-वृत्तेर्व्वेति।

अरूपिष्वित्यादि—विषयतासम्बन्धेन संख्यादिप्रत्यक्षे स्वाश्रयसमवेतत्व-सम्बन्धेन उद्भूतरूपवत्त्वस्य कारणतायाः क्लृप्तया रूपरहितवायुवृत्ति-संख्यादयो न प्रत्यक्षा इति भावः। अथ तर्हि वाय्वादौ संख्यादीनां तार्किका-देशमात्रसम्पाद्यत्वं परिप्राप्तमिति चेन्न युक्तिबलादेव तत्सिद्धेः। तथाहि—वायोरस्ति द्रव्यारम्भकत्वं, तच्च संख्यापरिमाणपृथक्त्वसंयोगानन्तरेण नोप-पद्यते। यतो हि आरम्भकपरमाणुद्वयसंयोगात् द्व्यणुकं, द्व्यणुकत्रयेण त्रस-रेणुः, त्रसरेणुचतुष्टयेन चतुरणुकम् इत्येवं क्रमेण द्रव्यारम्भः, तत्रावश्यं संख्या उपेया, द्व्यणुकपरिमाणं प्रति परमाणुद्वयगतद्वित्वसंख्यायाः त्रसरेणुपरि-माणं प्रति च द्व्यणुकत्रयगतत्रित्वसंख्यायाः कारणत्वेन अवश्यमङ्गीकार्य्य-त्वात्। आरम्भकसजातीयपरिमाणस्य च आरभ्यगतसजातीयप्रकृष्टपरिमाणे जनकत्वात् विशिष्टपरिमाणशालिनैव विशिष्टपरिमाणसमवायिवस्त्वा-रम्भनियमादवश्यमङ्गीकार्य्यं परिमाणमपि, अन्यथा वायोः स्वल्पाधिक्य-व्यवस्थानुपपत्तेः। पृथक्त्वमपि कार्य्यकारणभाववतोः पूर्व्वापरभावित्व-नियमरक्षार्थमुपगन्तव्यम्। संयोगस्तु द्रव्यारम्भे सुतरामुपयुक्त एव, अवयव-संयोगमन्तरा द्रव्यारम्भस्य कथमप्यसम्भवादित्यादिकमूहनीयम्। अवयव-विभागमन्तरेण संयोगनाशासम्भवात् वायवीयदेहादिनाशोपपादनाय

मानस्तत्र नाव्याप्तिः। वृत्तेरपि स्पर्शः साक्षात्कारयोग्य एव महावायुत्वे वा तात्पर्य्यम्। वायोर्नीरूपत्वेन प्रत्यक्षासम्भवात्तत्रानुमानं मानमाह—स्पर्शेति, स्पर्शः शब्दो धृति. कम्पश्च लिङ्गानि यस्य स तथा।

तथाहि व्यजनचलनोत्तरमनुभूयमानः पृथिव्याद्यवृत्तिस्पर्शो द्रव्याश्रितः स्पर्शत्वात् घटस्पर्शवत्। एवं पत्रादेर्मर्मरादिशब्दः सवेगस्पर्शवद्द्रव्याभिघातजः विलक्षणशब्दत्वात् दलद्वयविभागजशब्दवत्। तथा धृतिः वेगवद्द्रव्यसंयोगप्रयुक्ता अप्राणिगुरोरपतनत्वात् नौकाद्यपतनवत्। पक्षिप्रभृतेः प्रयत्नप्रयुक्ते तदपतने न व्यभिचारः। एवमश्वत्थदलादेः कम्पः सस्पर्शवेगवद्द्रव्याभिघातजः कर्मविशेषत्वात् दण्डाभिहतघटादिक्रियावदित्यादिप्रयोगसम्भवादिति भावः।

तिर्य्यग्गमनेति—तिर्य्यग्गमनं स्वभावोऽस्येति। कादाचित्की तु फुत्कारादेः सरलगतिर्विशेषसामग्रीवशादिति भावः।

मेघादीति—मेघधूलिपक्षिविमानादीनां प्रेरणं सञ्चारो धारणं पतनाप्रतिबन्धः आदिना शैत्याद्युपलम्भः। समर्थः अनुकूल इत्यर्थः।

---

## सूक्तिदीपिका

आदौ वायुत्वजात्यसिद्धेः समवायमन्तर्भाव्येत्याद्यसङ्गतं स्यादत आह न चेत्यादि। स्पर्शविशेषस्येति अनुष्णाशीतत्वे सति अपाकजस्पर्शस्येत्यर्थः। अनुष्णाशीतत्वे सति अपाकजस्पर्शत्वस्य अर्थसमाजग्रस्ततया कार्य्यतावच्छेदकत्वासम्भवमनुसन्धाय आह वह्निमात्रस्य वेति। कारणान्तरसमवधानेऽपि निर्व्वातदेशे वह्नेरदर्शनेन वातसत्त्वे च तद्दर्शनेन अन्वयतो व्यतिरेकतश्च वह्नित्वावच्छिन्नं प्रति वायुत्वेन कारणत्वं कल्पनीयं, तत्रापि वायुत्वस्य जातित्वे लाघवमिति लाघवज्ञानसहकारेण सिद्धं वायुत्वस्य जातित्वमिति भावः। अपाकजः अपाकजः स्पर्श इत्यर्थः। व्युदास इति तेजसः स्पर्शस्य उष्णत्वात् जलस्पर्शस्य शीतत्वात् पृथिवीस्पर्शस्य पाकजत्वात् तत्र तत्र न लक्षणातिप्रसङ्ग

অসম্ভবেন পৃথিবীপ্রভৃতিভিন্ন এব কশ্চিত্তদাশ্রয় ভবিষ্যঃ, স এব বায়ুরিতি ভাবঃ।

ননু বায়ুঃ প্রত্যক্ষঃ প্রত্যক্ষস্পর্শাশ্রয়ত্বাৎ ঘটবদিত্যাদিনা বায়োঃ প্রত্যক্ষত্ব-মনুমাতুং শাক্যমিতি চেন্ন প্রত্যক্ষস্পর্শাশ্রয়ত্বেন হেতুনা প্রত্যক্ষত্বসাধনে উদ্ভূত-রূপবত্ত্বস্য উপাধিত্বাৎ। বিস্তরস্তু অন্যত্রানুসন্ধেয়ঃ॥

---

## ভাষ্যতাৎপর্য্য

যাহাতে সমবায় সম্বন্ধে বায়ুত্ব জাতি থাকে তাহাই বায়ু। স্পর্শ সংখ্যা পরিমাণ পৃথক্ত্ব সংযোগ বিভাগ পরত্ব অপরত্ব ও বেগাখ্য সংস্কার এই নয়টী উহার গুণ। উক্ত গুণ আছে বলিয়াই বায়ুকে দ্রব্য বলিয়া মানিতে হইবে। সাধারণ স্পর্শবত্ত্ব প্রভৃতিকে বায়ুর সাধর্ম্ম্য বলিলে পৃথিবী প্রভৃতিতেও স্পর্শবত্ত্ব প্রভৃতি ধর্ম্ম থাকায় অতিপ্রসঙ্গ হয়, কাজেই স্পর্শবিশেষকেই বায়ুর সাধর্ম্ম্য বলিতে হইবে। তাহা এই যে অনুষ্ণ ও অশীত অপাকজস্পর্শই বায়ুর সাধর্ম্ম্য। অর্থাৎ যে স্পর্শ উষ্ণ বা শীত নহে, অথচ তেজঃসংযোগে উৎপন্ন হয় নাই, উক্তরূপ স্পর্শই বায়ুর সাধর্ম্ম্য। তেজের স্পর্শ অশীত ও অপাকজ হইলেও অনুষ্ণ নহে এইজন্য অনুষ্ণপদে তেজের নিরাস হইল, জলের স্পর্শ অনুষ্ণ ও অপাকজ হইলেও অশীত নহে, এইজন্য জলের বারণ হইল। পৃথিবীর স্পর্শ অনুষ্ণ ও অশীত হইলেও অপাকজ নহে, এইজন্য অপাকজপদে পৃথিবীর ব্যাবর্ত্তন হইয়াছে।

এখন আপত্তি হইতেছে এই যে, বৈশেষিকদর্শনের মতে পরমাণুতেই পাক হইয়া রূপান্তরাদির উৎপত্তি হয়, কিন্তু দ্ব্যণুকাদি অবয়বীতে পাক বা পাকজ-স্পর্শাদির উৎপত্তি স্বীকার করা হয় না, তবে পার্থিব ঘটাদি অবয়বীতে যে স্পর্শ আছে, উহা যেমন অনুষ্ণ ও অশীত তেমনই অপাকজ অতএব তাহাতে কিরূপে অতিব্যাপ্তি দোষ বারণ করা যায়। তাহার উত্তর এই যে, এস্থলে অপাকজপদের অর্থ,— পাক হইতে অনুৎপন্ন নহে। কিন্তু যে দ্রব্যবিভাজকধর্ম্ম পাকজ স্পর্শের আশ্রয়ে বর্ত্তমান হয় না, তাদৃশধর্ম্মসমানাধিকরণ স্পর্শ। ঘটাদিতে যে দ্রব্যবিভাজক ধর্ম্ম আছে, উহা পৃথিবীত্ব, ঐ ধর্ম্ম পরমাণুতেও থাকে বলিয়া উহা পাকজস্পর্শের আশ্রয়ে অবর্ত্তমান ধর্ম্ম নহে। উক্তরূপ ধর্ম্ম তেজস্ত্ব, বায়ুত্ব ও জলত্বই হইতে পারে, এখন অনুষ্ণ ও অশীত পদদ্বারা যদি তেজ ও জল ব্যাবর্ত্তন করা হইল, তবে

একমাত্র বায়ুই উক্তরূপ ধর্ম্মের সমানাধিকরণস্পর্শের আশ্রয়পদে পাওয়া যাইবে, অতএব আর কোনও দোষের আশঙ্কা নাই। লঘুভাবে অপাকজপদের অর্থ পৃথিবীতে অবর্ত্তমান এইরূপ করিলেও চলিতে পারে।

সামান্যতঃ সংখ্যাবত্ত্ব প্রভৃতিও বায়ুর সাধর্ম্ম্য হইতে পারে না, কারণ সংখ্যাবত্ত্ব প্রভৃতি বায়ুভিন্ন দ্রব্যেও বর্ত্তমান আছে, অতএব রূপশূন্য-স্পর্শবদ্‌বৃত্তি সংখ্যাবত্ত্ব প্রভৃতিকেই বায়ুর সাধর্ম্ম্য বলিতে হইবে। পৃথিবী, জল, তেজ ও বায়ু, এই চারিটী স্পর্শবান্ হইলেও প্রথম তিনটী রূপবান্, রূপশূন্য নহে, অতএব রূপশূন্য-স্পর্শবদ্‌বৃত্তি সংখ্যা বায়ুতেই মাত্র থাকায় অতিব্যাপ্তি হইল না। পরন্তু অপবত্ত্ব প্রভৃতি সাধর্ম্ম্যও ঐরূপেই বিবরণ করিতে হইবে। বায়ুতে রূপ না থাকায় উহাতে যে সংখ্যা পরিমাণ প্রভৃতি গুণ আছে, উহার চাক্ষুষ হয় না, কারণ গুণের চাক্ষুষ প্রত্যক্ষে আশ্রয়ে রূপবত্ত্ব থাকা প্রয়োজন হয়।

বায়ুতে অনুমান প্রমাণ দ্বারা বেগনামক সংস্কারও সিদ্ধ হইয়া থাকে। উক্ত অনুমানের প্রণালী এইরূপ, যথা—নোদনাদিব্যতিরেকেও যে তৃণাদি পদার্থে ক্রিয়া জন্মে দেখা যায়, উহা বিলক্ষণ ক্রিয়া বলিয়া উহা বেগবদ্দ্রব্যের অভিঘাতেই উৎপন্ন হইয়া থাকে। বেগবৎ পৃথিবী প্রভৃতির সে স্থলে সম্ভাবনা করা যায় না, এই জন্য বায়ুকেই ঐ বেগের আশ্রয় স্বীকার করিতে হয়। এই রূপে বায়ুতে বেগাখ্য সংস্কার সিদ্ধ হয়।

উক্ত বায়ু নিত্য বা অণু ও কার্য্য এই দুইভাগে বিভক্ত। কেবল নিত্য বা অণু-পরিমাণ বায়ু স্বীকার করিলে বায়ুর স্পর্শের প্রত্যক্ষ হইতে পারে না, কারণ মহত্ত্বকে প্রত্যক্ষের প্রতি কারণ বলা হইয়াছে। কেবল জন্য বায়ু স্বীকার করিতে গেলেও অবয়বের ধারা কোনও স্থানে বিশ্রান্ত না হওয়ায় অনবস্থা দোষ ঘটে, তাহাতে ক্ষুদ্র ও মহত্তর বায়ুর একরূপতাপ্রসঙ্গ দুর্নিবার হইয়া ওঠে। কারণ অবয়বের স্বল্পতা ও আধিক্য-প্রযুক্তই বস্তুর পরিমাণের স্বল্পাধিক্য উপপন্ন হয়, অনবস্থা দোষ হইলে আর অবয়বের স্বল্পাধিক্য কিরূপে স্থির করা যায়। সকল বস্তুই অনন্ত অবয়বজন্য বলিয়া উহার স্থিরতা থাকে না।

উক্ত কার্য্য বা জন্য বায়ু শরীর ইন্দ্রিয় বিষয় ও প্রাণভেদে চারি প্রকার। বায়বীয় শরীর অযোনিজ অর্থাৎ উহা শুক্র ও শোণিতের সম্পর্ক ব্যতিরেকেই উৎপন্ন হইয়া থাকে। ঐ বায়বীয় দেহ বায়ুলোকে প্রসিদ্ধ আছে। বায়বীয়

দেহ কেবল বায়ু দ্বারা নির্ম্মিত হইলে উহা দ্বারা ধারণ আকর্ষণ প্রভৃতি করা অসম্ভব হয় বলিয়া তাহা দ্বারা ভোগ সম্ভব হয় না, এইজন্য পার্থিব অংশের সংযোগে উহা উপভোগের যোগ্য হয় বলিতে হইবে। পরন্তু পার্থিব অংশ ঐ দেহের সমবায়ি কারণ নহে, কেবল বায়ুই উহার সমবায়ি কারণ, পার্থিব অংশাদি নিমিত্ত কারণ। তাহার যুক্তি পূর্ব্বেই বিবৃত করা হইয়াছে।

সর্ব্বপ্রাণীরই যে ইন্দ্রিয় দ্বারা স্পর্শের উপলব্ধি বা প্রত্যক্ষ হয়, তাহাই বায়বীয় ইন্দ্রিয়, উহাকে ত্বগিন্দ্রিয় বলা হয়। ঐ ইন্দ্রিয় পৃথিবী প্রভৃতি দ্বারা অনভিভূত বায়বীয় অবয়বে নির্ম্মিত। ত্বগিন্দ্রিয় সর্ব্বশরীরব্যাপী, কারণ হস্তপদাদি বিশেষ কোনও অবয়বকে ত্বগিন্দ্রিয়ের আশ্রয় বলিলে অন্য স্থানের সহিত যুক্ত ঘটাদির উক্ত ইন্দ্রিয়জন্য প্রত্যক্ষ অসম্ভব হয়। অথচ যে কোনও স্থানের সহিত যোগ হইলেই ত্বগিন্দ্রিয় জন্য প্রত্যক্ষ হইতে দেখা যায়। সেই সেই স্থানে ত্বগিন্দ্রিয় না থাকিলে ঐ সকল স্থানের সহিত যুক্ত ঘটাদি পদার্থে উক্ত ইন্দ্রিয়ের সম্বন্ধ না থাকায় কিরূপে স্পার্শন প্রত্যক্ষ হইতে পারে। সর্ব্বশরীর ব্যাপিয়া ত্বগিন্দ্রিয় আছে এ কথা স্বীকার করিলে আর উক্ত দোষ হয় না। কেশ নখ দন্ত ও লোম শরীরের অবয়ব নহে, উহা শরীরের উৎপত্তির পর উৎপন্ন হইয়া থাকে, অতএব কেশাদিতে ত্বক্ না থাকিলেও উহার সর্ব্বাবয়বব্যাপিত্ব অনুপপন্ন হইবে না।

যাহাতে সাক্ষাৎকারের যোগ্য স্পর্শ আছে, তাহাই বায়বীয় বিষয়। বায়বীয় ত্রসরেণুর স্পর্শও সাক্ষাৎকারের যোগ্য বলিয়া বায়বীয় ত্রসরেণু হইতেই বায়বীয় বিষয় ধরিতে হইবে। বাস্তবিক শরীর ইন্দ্রিয় ও প্রাণ ভিন্ন বায়বীয় জন্য বস্তুমাত্রই বিষয় পদে জ্ঞাতব্য।

বায়ুতে রূপ না থাকায় বায়ু প্রত্যক্ষ হয় না বটে, কিন্তু অনুমান দ্বারা উহার সিদ্ধি হয়। বায়ুর শব্দ স্পর্শ ও পত্রাদির ধৃতি ও কম্প ঐ অনুমানের উপযোগী। প্রথমতঃ স্পর্শ দ্বারা অনুমিতি এইরূপ, যথা—স্পর্শ গুণ বলিয়া যখন দ্রব্যাশ্রিত, তখন ব্যজনচালনের পর যে পৃথিব্যাদিতে অবর্ত্তমান স্পর্শের উপলব্ধি হয়, উহাও দ্রব্যাশ্রিত, আশ্রয়ীভূত উক্ত দ্রব্য যখন পৃথিব্যাদি সম্ভব হয় না, তখন উহাই বায়ু। শব্দ দ্বারা অনুমান, যথা—মর্ম্মরাদি বিলক্ষণ শব্দমাত্রই যখন বেগযুক্ত-স্পর্শবৎ দ্রব্যের অভিঘাতে উৎপন্ন হয়, তখন পত্রাদির মর্ম্মর শব্দও কোনও বেগযুক্ত স্পর্শবৎ দ্রব্যের অভিঘাতে উৎপন্ন, কারণ উহাও বিলক্ষণ শব্দ, যেমন দলদ্বয়ের বিভাগহেতু

উৎপন্ন শব্দাদি। উক্ত বেগযুক্ত স্পর্শবৎ দ্রব্য যখন পৃথিব্যাদি নহে, কারণ তাহা হইলে পত্রের প্রত্যক্ষের ন্যায় উহারও প্রত্যক্ষ হইত, অতএব উহাই পৃথিব্যাদি ভিন্ন বায়ুপদার্থ। এই রূপ অপরাপর অনুমানও অনুসন্ধেয়।

বায়ুর বক্রগতিই স্বভাব। কদাচিৎ কোনও বিশেষ কারণে বায়ুর সরল গতি হইলেও উহা তদীয় স্বভাব নহে। বায়ুই মেঘাদিকে আকাশমার্গে চালিত করে এবং ধারণ করিয়া রাখে। বায়ু প্রত্যক্ষ যোগ্য না হইলেও সম্মূর্চ্ছন অর্থাৎ তুল্যবেগযুক্ত বিরুদ্ধ উভয়দিক্ হইতে আগত বায়ুদ্বয়ের পরস্পর মিলনরূপ ক্রিয়া দ্বারা বায়ুর নানাত্ব অনুমিত হয়। তাৎপর্য্য এই যে যখন তুল্যবেগে উভয়দিক্ হইতে বায়ু প্রবাহিত হইতে থাকে, তখন যে বায়ু পশ্চিমদিক্ হইতে প্রবাহিত হয় তাহা পত্রাদিকে পূর্ব্বদিকে লইয়া যাইতে পারে, আবার যে বায়ু পূর্ব্বদিক্ হইতে প্রবাহিত হয়, তাহা পত্রাদিকে পশ্চিমদিকে লইয়া যাইতে পারে, কিন্তু উভয় বায়ু উভয়দিক্ হইতে তুল্যবেগে প্রবাহিত হওয়ায় পত্রাদি কোনও দিকেই নীত হয় না, এই অবস্থায় দুইটী বায়ু স্বীকার না করিলে একটী বায়ুর উক্তরূপ বিরুদ্ধদিকে ক্রিয়া উপপন্ন হইতে পারে না। নানাত্ব স্বীকার করিলে উভয়ের ক্রিয়াদ্বয় পরস্পর বিরোধী হওয়ায় পত্রাদির মধ্যস্থানে অবস্থানই সম্ভব হয় ইত্যাদি। অপ্রত্যক্ষ বায়ুদ্বয়ের পরস্পর সম্মেলনও তৃণাদিগতি দ্বারা অনুমিত হইয়া থাকে।

শরীরের অভ্যন্তরে রস মল ও ধাতুর প্রেরণাদি সম্পাদক বায়ুকেই প্রাণ-সংজ্ঞায় অভিহিত করা হয়। ঐ প্রাণবায়ুই ক্রিয়াভেদে প্রাণ অপান সমান উদান ও ব্যান এই পঞ্চবিধ সংজ্ঞা প্রাপ্ত হইয়া থাকে। যে বায়ু মুখ ও নাসিকা দ্বারা নিষ্ক্রম ও প্রবেশ করে, তাহার নাম প্রাণ। যে বায়ু মল প্রভৃতিকে অধোগামী করে, তাহার নাম অপান। যে বায়ু সমতাসম্পাদন করে, তাহার নাম সমান। যে বায়ু শরীরের অভ্যন্তরস্থ বস্তুকে উর্দ্ধে দিকে উত্থাপিত করে, তাহার নাম উদান। যে বায়ু নাড়ীর মুখে বিস্তৃত হয়, তাহার নাম ব্যান। কেহ কেহ প্রাণাদি সংজ্ঞা স্থানভেদে বর্ণনা করিয়া থাকেন, তাহাদের মতেও আলোচনা করিলে উক্তরূপ ক্রিয়াভেদেই সংজ্ঞা হইয়া থাকে।

---

प्रशस्तपादभाष्यम्।

इहेदानीं चतुर्णां (१) महाभूतानां सृष्टिसंहार-विधिरुच्यते। ब्राह्मेण मानेन वर्षशतस्यान्ते (२) वर्त्तमानस्य ब्रह्मणोऽपवर्गकाले संसारे खिन्नानां (३) सर्व्वप्राणिनां निशि विश्रामार्थं सकलभुवनपतेर्महेश्वरस्य सञ्जिहीर्षासमकालं शरीरेन्द्रियमहाभूतोपनिबन्धकानां सर्व्वात्मगतानामदृष्टानां वृत्तिनिरोधे सति महेश्वरेच्छात्माणुसंयोगजकर्म्मभ्यः शरीरेन्द्रियकारणाणुविभागेभ्यस्तत्संयोगनिवृत्तौ तेषामापरमाणवन्तो विनाशः। तथा पृथिव्युदकज्वलनपवनानामपि महाभूतानामनेनैव क्रमेण उत्तरस्मिन्नुत्तरस्मिंश्च (४) सति (५) पूर्व्वपूर्वस्य विनाशः। ततः प्रविभक्ताः परमाणवोऽवतिष्ठन्ते धर्म्माधर्म्मसंस्कारानुविद्धाश्चात्मानस्तावन्तमेव कालम्। ततः पुनः प्राणिनां भोगभूतये महेश्वरस्य (६) सिसृक्षानन्तरं सर्व्वात्मगतवृत्तिलब्धा-

(१) चतुर्णामपि इति पाठान्तरम्।

(२) वर्षशतान्ते इति पाठान्तरम्।

(३) संसारखिन्नानामिति पाठान्तरम्।

(४) उत्तरस्मिन् उत्तरस्मिन् इति पाठान्तरम्।

(५) पूर्व्वस्य पूर्व्वस्य इति पाठान्तरम्।

(६) महेश्वरसिसृक्षेति पाठान्तरम्।

दृष्टापेक्षेभ्यस्तत्संयोगेभ्यः पवनपरमाणुषु कर्मोत्पत्तौ तेषां परस्परसंयोगेभ्यो द्व्यणुकादिप्रक्रमेण महान् वायुः समुत्पन्नो नभसि दोधूयमानस्तिष्ठति। तदनन्तरं तस्मिन्नेव वायाप्येभ्यः परमाणुभ्यस्तेनैव क्रमेण महान् सलिलनिधिरुत्पन्नः पोप्लूयमानस्तिष्ठति। तदनन्तरं तस्मिन्नेव जलनिधौ (७) पार्थिवेभ्यः परमाणुभ्यो द्व्यणुकादिप्रक्रमेण महापृथिवी समुत्पन्ना (८) संहतावतिष्ठते। तदनन्तरं तस्मिन्नेव महोदधौ तैजसेभ्योऽणुभ्यो द्व्यणुकादिप्रक्रमेण उत्पन्नो महांस्तेजोराशि(९)-र्देदीप्यमानस्तिष्ठति। एवं समुत्पन्नेषु चतुर्षु महाभूतेषु महेश्वरस्याभिध्यानमात्रात् तैजसेभ्योऽणुभ्यः(१०) पार्थिवपरमाणुसहितेभ्यो महदण्डमुत्पद्यते (११)। तस्मिंश्चतुर्वदनकमलं सर्वलोकपितामहं ब्रह्माणं सकल-भुवनसहितमुत्पाद्य प्रजासर्गे विनियुङ्क्ते। स च महेश्वरेण विनियुक्तो ब्रह्मा अतिशयज्ञानवैराग्यैश्वर्य्य-सम्पन्नः प्राणिनां कर्म्मविपाकं विदित्वा कर्म्मानु-

(७) क्वचित् जलनिधाविति नास्ति।

(८) क्वचित् समुत्पन्नेत्यधिकम् नास्ति।

(९) केनचिदनभिभूतत्वात् इति क्वाप्यधिकम्।

(१०) पार्थिवादि इति पाठान्तरम्।

(११) महदण्डमारभ्यते इति पाठान्तरम्।

रूपज्ञान(१२)भोगायुषः सुतान् प्रजापतीन् मानसान् मनुदेवर्षिपितृगणान् मुखबाहूरूपादतश्चतुरो वर्णा-नन्यानि चोच्चावचानि भूतानि सृष्ट्वा आशयानुरूपै-र्धर्म्मज्ञानवैराग्यैश्वर्य्यैः संयोजयतीति।

[ संज्ञाकर्म्म त्वस्मद्विशिष्टानां लिङ्गम्—२अ-१आ-१८सू। प्रत्यक्षप्रवृत्तत्वात् संज्ञाकर्म्मणः—२अ-१आ-१९सू। नोदनाभिघातात् संयुक्तसंयोगाच्च पृथिव्यां कर्म्म – ५अ-२आ-१सू। एतेन विभागो व्याख्यातः—७अ-२आ-१०सू। पृथिवी-कर्म्मणा तेजःकर्म्म वायुकर्म्म च व्याख्यातम्—५अ-२-आ-१२सू। अन्यतर-कर्म्मज उभयकर्म्मजः संयोगजश्च संयोगः—७अ-२आ-९सू। संयोगाद्वा—१०अ-२आ-२सू। इत्येतानि सूत्राण्यालम्बनानि। ]

---

## जगदीशसूक्तिः

प्रसङ्गादाह चतुर्णामिति। चतुर्णां पृथिव्यादीनां महाभूतानां परमाण्वपेक्षया उत्कृष्टपरिमाणवतां तेन द्व्यणुकस्याप्युपग्रहः। सृष्टि-संहारस्य सृष्टिप्राक्कालीनप्रलयस्य तेन महाप्रलयस्य व्युदासः। विधिः क्रमः। सृष्टिसंहारयोरुत्पत्तिप्रलययोः विधिः कथ्यत इत्यर्थ इत्याचार्य्याः।

ब्राह्मेण मानेनेति—'मानुषेणैकवर्षेण देवानां दिनमुच्यते। तेषां शतत्रयं षष्टियुक्तं वर्षन्तु दैवतः। दैववर्षसहस्राणि द्वादशाहश्चतुर्युगम्। चतुर्युगसहस्रन्तु ब्रह्मणो दिनमुच्यते।' इति स्मृतिसिद्धब्राह्मादि-मानेन यद्वर्षशतं तस्यान्ते ब्रह्मणोऽपवर्गकाले मुक्तिकाले। ब्रह्मेशान-प्रभृतीनामपीन्द्रादिवत् जीवप्रभेदत्वमतेनेदम्। ब्रह्मणः परमात्मनः अस्मदाद्यदृष्टोपगृहीतधातृदेहविच्छेदकाले इति वार्थः।

---

(१२) ज्ञानवैराग्यभोगेति पाठान्तरम्।

संसरतीति संसारः शरीरं तत्र खिन्नानां विविधदुःखानुभाविनाम्। निशीति-ब्राह्मेण मानेनेत्यनुषज्यते।

चतुर्युगसहस्रन्तु ब्रह्मणो दिनमुच्यते।

रात्रिश्चैतावती तस्य ताभ्यां पक्षादिकल्पना। इति स्मृतेः।

निशीत्यस्य निशातुल्ये इत्यर्थं इति त्वाचार्य्याः। विश्रामार्थं खेदोपशमनार्थं, सकलभुवनपतेः त्रिभुवननिहन्तुः महेश्वरस्य परमात्मनः। सञ्जिहीर्षा संहारसामग्रीविशिष्टेच्छा तत्समकालं अदृष्टानां वृत्तिनिरोधे सतीत्यग्रेतनेऽन्वितमिदम्। सञ्जिहीर्षासमकालं सञ्जिहीर्षोत्तरकालमिति त्वाचार्य्याः। तेषाञ्चापरमाण्वन्तो विनाश इत्यग्रेतनेऽन्वयोऽभिप्रेतः।

यद्यपि शरीरादिकं महाभूतमेव तथाप्यत्र महाभूतपदं प्रागुक्त विषयपरम्। उपनिबन्धकं जनकम्। सर्व्वात्मगतेति-सर्व्वेषामात्मवृत्त्य-दृष्टानां वृत्तिः फलोपधानं तस्य निरोधे प्रतिबन्धे सतीत्यर्थः। फलानुत्-पत्त्या जन्यद्रव्यत्वावच्छिन्नं प्रति ब्रह्मरात्रित्वेन प्रतिबन्धकत्वमित्यभि-प्रायः। प्रलयहेतुभूतादृष्टमेव जन्यद्रव्यनिरोधकमिति त्वाचार्य्यमतन्तु प्रलयप्राक्क्षण एव तादृशादृष्टस्योत्पत्त्यभ्युपगमे शोभत इति ध्येयम्।

महेश्वरेति—महेश्वरेच्छासहितैरात्मपरमाणुसंयोगैर्जनितेभ्यः पर-माणुकर्म्मभ्य इत्यर्थः। पञ्चम्या जन्यत्वमर्थः, तच्च अग्रिमविभागे अन्वितम्। तत्संयोगनिवृत्तौ शरीराद्यारम्भकाणां परमाणुसंयोगानां निवृत्तावित्यर्थः। तेषां शरीराणामिन्द्रियाणाञ्च आ सम्यक् प्रकारेण द्व्यणुकादिनाशक्रमेणेति यावत्। परमाण्वन्तः परमाण्ववसानकः। प्रलये विषयसंज्ञकानां नाशे विशेषं दर्शयन्नाह तथेति। महाभूतानां विषयसंज्ञकानाम्। अनेनैवेति परमाणुक्रियाविभागादिक्रमेणैवेत्यर्थः। उत्तरोत्तरस्मिन्निति-प्रथमं पार्थिवस्यैव विषयस्य विनाशः, ततो जल-

स्योत्तरं तेजसः पश्चाद्वायोर्विनाश इत्यर्थः। अयञ्च क्रमः श्रुतिसिद्ध-त्वादुपात्त इत्याचार्य्याः।

ननु पृथिव्युदकज्वलनपवनानां क्रमेणैव ध्वंसवतः कालस्य प्रलय-त्वानुपपत्तिः कार्य्यद्रव्यानधिकरणकालस्यैव तत्त्वादत आह तत इति। पृथिव्यादिचतुर्णां नाशोत्तरमेवेत्यर्थः। प्रविभक्ताः कार्य्यद्रव्यरहिताः। कार्य्यद्रव्यराहित्यं कार्य्यभावानधिकरणत्वेऽप्युपपद्यमानं न खण्ड-प्रलयत्वनिर्व्वाहकं महाप्रलयस्यापि तत्त्वादतस्तद्व्यावृत्त्यर्थमाह धर्म्मेति। धर्म्माधर्म्मभावनाख्यसंस्कारैरनुविद्धा विशिष्टा आत्मानश्चावतिष्ठन्त इति पूर्व्वेणान्वयः। चकाराद्गगनादिनित्यवर्गस्य पाकजरूपाद्यनित्यवर्गस्य चोपग्रहः। तावन्तमेव कालं ब्राह्ममानेन शतवर्षपर्य्यन्तं कालमित्यर्थः। तथाच कालः कार्य्यद्रव्यानधिकरणत्वात् खण्डप्रलयः न त्वन्यस्तथेति भावः। खण्डप्रलये धर्म्मादेः सत्त्वे प्रमाणमावेदयितुमुत्तरकालं सृष्टिं प्रतिपादयति तत इति। महाभूतानां सृष्टिसंहारयोर्द्वयोर्विधानस्य प्रतिज्ञातत्वात् संहारविधिमुक्त्वा सृष्टिमाह तत इति त्वाचार्य्यस्वरस-सिद्धस्तत इत्यस्यावतारक्रमः।

प्राणिनां संसारिणां भोगस्य सुखदुःखानुभवस्य भूतये निष्पत्त्यर्थं सिसृक्षायाः सृष्टिसामग्र्यपहितेच्छायाः अनन्तरम् उत्तरकालं सर्व्वाणि यान्यात्मगतानि अथ च वृत्तिलब्धानि लब्धवृत्तीनि लब्धफलोपधानानी-त्यर्थः, अदृष्टानि। तत्सापेक्षेभ्यः तत्संयोगिभ्यः तदाश्रयात्मभिः संयोगिभ्यः। पवनपरमाणुषु कर्म्मोत्पत्तौ सत्यां तेषां परमाणूनां पूर्व्व-देशविभागादिक्रमेण जातेभ्यः परस्पर संयोगिभ्यो यानि द्व्यणुकानि तदादिक्रमेण महावायुरुत्पन्नो नभसि आकाशे दोधूयमानोऽत्यर्थं कम्पमानस्तिष्ठति मूर्त्तान्तरानुत्पत्त्या तद्वेगस्याप्रतिहतत्वादिति भावः। तदनन्तरं महापवनोत्पत्त्यनन्तरं तस्मिन्नेव पवने आप्येभ्यो जलारम्भ-केभ्यः परमाणुभ्यः प्रागुक्तरीत्या द्व्यणुकादिक्रमेण महान् सलिलनिधिः

समुद्र उत्पन्नः पोप्लूयमानोऽत्यर्थं प्लवनशीलस्तिष्ठति पवनाभिहतस्य प्लवनातिशये वाधकाभावादिति भावः।

तदनन्तरं सलिलनिधेस्तत्पत्त्यनन्तरम्। तस्मिन्नेव सलिलनिधौ। संहता कठिना। देदीप्यमानः अत्यर्थं प्रकाशमानः। एवं वायुजलपृथिवी-तेजःक्रमेण। अयञ्च क्रमः श्रुतिसिद्ध इत्युपात्तः। महेश्वरस्य अभि-ध्यानं ब्रह्माण्डोत्पत्तिगोचरं ज्ञानम् इच्छा वा तन्मात्रात्। न तु तदीयं शरीरमपेक्षणीयमिति मात्रशब्दस्यार्थः। तैजसेभ्य इति समवायि-कथनम्। पार्थिवपरमाणुसहितेभ्य इति पार्थिवाद्युपष्टम्भकथनम्। तथा सत्येव तैजसाण्डस्य हिरण्मयत्वसम्भवात्। सर्व्वलोकानां तदण्डस्थानां पितामहम्। सर्व्वैः भूर्भुवःस्वरादिलोकैः सहितं प्रजासर्गं प्रजासृष्टिनिमित्तं नियुङ्क्ते 'प्रजास्त्वं सृजे'ति आज्ञापयति महेश्वर इत्यर्थादवगम्यते। अत एवाह स चेति। न च महेश्वरेणैव सह-कारिवशेन प्रजानिर्म्माणसम्भवादर्थं ब्रह्मणेति वाच्यम् शरीरनिष्पाद्याना-मादिकार्य्याणां निःशरीरेणेश्वरमात्रेणानिष्पत्तेः तदर्थं ब्रह्मणोऽप्य-पेक्षणीयत्वात्।

अथ ब्रह्मैव यद्यज्ञः स्यात्, कथं कर्म्म कुर्य्यात्? यदि वा क्वचिदनु-रक्तः स्यात्, कथं तदनिष्टमुत्पादयेत्? यदि च अनीश्वरः स्यात्, जानानोऽप्यसौ सुदुष्करं वैधकर्म्म कथं साधयेदत उक्तं अतिशयज्ञाने-त्यादि। यदा त्वीश्वर एव तत्तत्कार्य्यवशात् ब्रह्मादिदेहं परिगृह्णाति 'नमः कुलालेभ्यः कर्म्मकारेभ्यश्च [ कर्म्मारेभ्यः' ] इति श्रुतिप्रमाण-कत्वादिति मतं, तदा ब्रह्मणोश्वरस्य नियोगः कार्य्यानुकूलतत्कृति-सहकृतत्वरूपो वोध्यः।

कर्म्मविपाकमिति—प्राणिनां यानि कर्म्माणि तेषां विविधं पाकं फलोपधानं विदित्वेत्यर्थः। मानसान् अयोनिजान् भूतान् मरीच्यत्रि-प्रभृतीन् सृष्ट्वा इत्यग्रेतनेनान्वयः। प्रजापतीन् दक्षादीन्। मनवः

स्वायम्भुवाद्याः। देवाः आदित्याः। ऋषयः भारद्वाजाद्याः। पितरः कव्यवालाद्याः। तेषां प्रत्येकं गणानित्यर्थः।

मुखेति—मुखाद् ब्राह्मणं बाहुभ्यां क्षत्रियं ऊरुभ्यां वैश्यं पादाभ्यां शूद्रमित्येवं चतुरो वर्णानित्यर्थः। तथाच श्रुतिः 'ब्राह्मणोऽस्य मुखमासीत् बाहू राजन्यः कृतः। ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत' इति।

उच्चावचानि—उत्कृष्टापकृष्टानि भूतप्रेतादीनि। आशयः पूर्व्वजन्मसंस्कारः। तदनुरूपैस्तत्सदृशैरित्यर्थः। धर्म्मज्ञान-वैराग्यैश्वर्य्यैरित्युपलक्षणम्। अधर्म्माज्ञानावैराग्यानैश्वर्य्यैरित्यपि द्रष्टव्यम्।

---

## सूक्तिटीपिका

पृथिव्यादीनां मरुदन्तानामनित्यद्रव्याणां निरूपणानन्तरं प्रतिप्रकरणं सृष्टिसंहारविधेर्निरूपणे ग्रन्थगौरवभिया एकोपक्रमेण तन्निरूपणाय नितरामपेक्षणीयायाः सङ्गतेः प्रदर्शनायाह प्रसङ्गादिति। एकसम्बन्धिज्ञानस्य अपरसम्बन्धिस्मारकतया सृष्टिसंहारक्रमसम्बन्धिनां पृथिव्यादीनां विज्ञानेन निरुक्तक्रमस्य स्मरणात् परमेश्वरसिद्धग्रनुकूलतया उपेक्षानर्हत्वाच्च स्मृतिविषयत्वे सति उपेक्षानर्हत्वरूपा सेयं सङ्गतिः प्रकृते समन्वेति।

चतुर्णामित्येतन्मात्रोक्तौ पृथिव्याद्यन्तर्गतानां कासाञ्चन चतुःसंख्यक-महाभूतव्यक्तीनां सृष्टिसंहारविधिनिरूपणेनापि प्रतिज्ञायाश्चरितार्थतया सर्व्वेषां पृथिव्यादीनां सृष्टिसंहारविधिनिरूपणमनपेक्षितं स्यादिति चतुर्णामित्यस्य पृथिव्यादीनामित्यर्थविवरणम्। पृथिव्यादीनां परमाणुपर्य्यन्ततया चतुर्णां पृथिव्यादीनामित्येतन्मात्रे स्थिते प्रतिज्ञेयं विसंवादिनी स्यादतो महाभूतानामिति। कन्दलीकारास्तु—'चतुर्णामित्युक्ते चानन्तरोक्तमेव वायुकार्य्यं शरीरमिन्द्रियं विषयः प्राण इति चतुष्टयं बुद्धौ निविशते, तन्निवृत्त्यर्थं महाभूतानामिति' प्राहुः। महत्त्वस्य त्रुटिपर्य्यन्तविश्रान्ततया द्व्यणुकमारभ्य सृष्टिसंहारावधिप्रदर्शनमप्रतिज्ञातार्थकतया नोपयुक्तं स्यादतो द्व्यणुकसाधारणं

महत्त्वमाह परमाण्वपेक्षयेत्यादिना। कन्दलीकारास्तु 'विधिशब्दोपादानात् येन प्रकारेण महाभूतानामुत्पत्तिविनाशौ स प्रकारः कथ्यत इत्युक्तं, तेषाञ्च द्व्यणुकादिप्रक्रमेण उत्पत्तिरापरमाण्वन्तश्च विनाश इति अतो द्व्यणुकानामपि सृष्टिसंहारौ प्रतिज्ञातौ स्याता'मिति वदन्ति ; तन्न सम्यक् त्रसरेणोरुत्पत्तौ द्व्यणुकस्य अपेक्षणीयतया द्व्यणुकोत्पत्तेरपि वक्तव्यत्वेन गौणतया एव तल्लाभः, न तु मुख्यतया, अतो मुख्यतया तत्प्रतिज्ञानकल्पः श्रेयान्। महाभूतानां विनाशस्य तु द्व्यणुकपर्य्यवसायित्वेन द्व्यणुकनाशस्य तथापि अलाभश्चेत्यसमञ्जसश्च द्व्यणुकनाशप्रस्तावः स्यात्।

परमाण्वपेक्षयेत्यादि—अत्र परमाणुद्व्यणुकयोर्द्वयोरेव परिमाणस्य अणुत्वेऽपि परमाणुगताणुपरिमाणापेक्षया द्व्यणुकगताणुपरिमाणस्य किञ्चिदाधिक्यमित्यभिप्रायः। अत एव परमाणुशब्दस्य कर्म्मधारयव्युत्पत्तिसिद्धत्वात् अणुत्वमादाय परमाणौ परमत्वं नानुपपन्नं भवति। उक्तञ्च मञ्जूषाकारैः—'प्रकृते तु द्व्यणुकात्तदवयवोऽणुतरः, द्व्यणुकाणुत्वात्तदवयवाणुत्वमुत्कृष्टमित्यादिव्यवहारेण यथा अणुत्वत्वव्याप्यावुत्कर्षापकर्षौ एवं द्व्यणुकपरिमाणात् त्रसरेणुपरिमाणमुत्कृष्टं त्रसरेणुपरिमाणात् द्व्यणुकपरिमाणमपकृष्टमिति व्यवहारेण परिमाणत्वव्याप्यौ महत्त्वाणुत्वयोरुत्कर्षापकर्षौ स्यातामेवे'ति।

न चैवं 'महदारब्धस्य महत्तरत्ववदणुजन्यस्य अणुतरत्वप्रसङ्गा'दिति मुक्तावलीपंक्तिव्याख्याने अलीकस्य अणुतरत्वस्य आपत्तिः कथं सङ्गच्छत इति साम्प्रदायिकप्रश्नो नोपपद्यत इति वाच्यं परमाणुद्व्यणुकयोः परिमाणवैलक्षण्यास्वीकारपक्षमाश्रित्यैव तथा व्याख्यानस्य लब्धपदत्वात्। न च अणुतरपरिमाणस्याभ्युपगमे अणुजन्यस्य तथा परिमाणस्वीकारे का क्षतिरिति वाच्यं परमाणुपरिमाणस्यैव अणुतरपरिमाणतया द्व्यणुकपरिमाणजन्यपरिमाणवत्तया अभिमतस्य त्रसरेणोरचाक्षुषत्वप्रसङ्गात्। तदेवं परमाणुपरिमाणमपेक्ष्य स्थितमेव द्व्यणुकपरिमाणे किञ्चिदाधिक्यम्, अत एव 'परमाण्वपेक्षया उत्कृष्टपरिमाणवता'मित्यर्थकरणात् द्व्यणुकलाभो नानुपपन्नः प्रतिभाति। 'महत्परिमाणतारतम्यस्य गगनादौ विश्रान्तत्वमिव अणुपरिमाणतारतम्यस्यापि क्वचिद्विश्रान्तत्वमस्तीति' मुक्तावलीपंक्तिरपि तदभिप्रायमूलिकैवेति केचिदाहुः

निपुणास्तु 'प्रकृते जन्यत्वरूप एव परिमाणगत उत्कर्षो व्याख्येयः। एवञ्च द्व्यणुकपरिमाणस्याणुत्वेऽपि जन्यत्वादेव नानुपपत्ति'रिति प्राहुः। वस्तुतस्तु परमाणुपरिमाणापेक्षया द्व्यणुकपरिमाणे समुत्कर्ष औपचारिक एवाभ्युपगम्यते। अत एवोक्तमाचार्य्यैः—'परमाणुभ्योऽधिकपरिमाणतयोपचाराद् द्व्यणुकमपि महाभूतमुक्त'मिति। न चैवं मुक्तावल्यादिनिरुक्त-तारतम्यपदार्थानुपपत्तिरिति वाच्यम् तारतम्यं हि प्रकृते न न्यूनाधिकभावः। किन्तु अपकर्षानाश्रयाणुपरिमाणमिति समभिव्याहृतोऽर्थः। परमाणुपदघटकं परमत्वमपि नित्यत्वरूपोत्कर्षप्रतिपादकतया कर्म्मधारयसमासं नावरुन्धे। तदुक्तं मञ्जूषाकारैः—'अणुपरिमाणतारतम्यस्येति अपकर्षानाश्रयाणुपरिमाणस्येत्यर्थ' इति।

सृष्टिप्राक्कालीनेत्यादि—एतेन संसारप्रवाहस्य अनादित्वमुट्टङ्कितं भवति। निरुक्तप्रलयश्च जन्यद्रव्यानधिकरणकाललक्षणखण्डप्रलयरूपो ग्राह्यः।

तेनेत्यादि—तथाहि सर्व्वभावकार्य्यध्वंसलक्षणमहाप्रलये सृष्टिकारणीभूतानामदृष्टानामपि विलयेन परतः सृष्टेरसम्भवात् संहारानन्तरं सृष्टिकथनं विरुध्येतेति भावः। सृष्टिसंहारयोरित्याचार्य्यपरिगृहीतार्थस्तु सृष्टिक्रमसंहारक्रमयोर्द्वयोरेव निरूपणस्य मुख्यतया बोधकत्वेन शाब्दक्रमपरिहारे विनिगमकाभावात् परिहेयः।

जीवप्रभेदत्वमतेनेत्यादि—तथाहि यथा जीवविशेषा यागविशेषप्रसूतेनादृष्टेन स्वाराज्यमनुप्रविशन्ति, तथैव जीवभेदा एव कर्म्मविशेषानुगृहीतपुण्योपचयाद् ब्रह्मादिपदभाजोऽन्ते मुक्तिपदमनुप्रविशन्ति इति। अत एवाचार्य्याः—'ये ह्यसङ्कल्पितफलकर्म्मकर्त्तारः साकारोपासनापरिवासितचेतसो यतयोऽतस्ते हिरण्यगर्भपदवीमनुप्राप्यापवृज्यन्ते' इत्यागमशासनमनुशिष्टवन्तः।

अस्मदित्यादि—जीवादृष्टानुसारेण सृष्ट्यादिनिष्पादनाय सृष्ट्यादिक्रियायाः शरीरसाध्यत्वनियमात् ईश्वर एव चतुर्म्मुखादिशरीरमुपगृह्य तत्तत्क्रिया निष्पादयति, यदा च सर्वेषामदृष्टानां कालवशात् वृत्तिप्रतिबन्धस्तदा तत्तद्देहस्य निष्फलतया परिहारः, स एव मोक्ष इति व्यपदिश्यते। तदुक्तमाचार्य्यैः 'यदा त्वीश्वर एव कार्य्यवशात् गृहीतदिव्यदेहो ब्रह्माद्यवस्थामापद्यते

इति पक्षः, तदा ब्रह्मणोऽपवर्गकाले देहापवर्गकाल इति व्याख्येय'मिति। परमेश्वरस्यैव ब्रह्मादिरूपत्वमिति विशेषेण प्रतिपादितं गदाधरेण अनुमितिनिरूपणे नमस्कारविचारे 'ईश्वरस्य सर्गादिकर्त्तृत्वे ब्रह्मादीनां तथात्वबोधकानामागमानामपि प्रामाण्यमिति सूचयितुं तस्य ब्रह्माद्यभेदाभिधान'मित्यादिना।

त्रिभुवननिहन्तुरिति—संहारकर्म्मणः प्रकृतत्वात् सकलभुवनपतेरित्यस्य यथाश्रुतार्थो न घटते, अत एव तथार्थविवरणम्। परमात्मन इति संहारमूर्त्तिरुद्रशरीरधारिणः परमेश्वरस्य इत्यर्थः। सृष्टिस्थितिसंहारकर्त्तृत्वरूपस्य परमपदार्थोत्कर्षस्य परमात्मशब्दप्रतिपाद्यत्वेन परमात्मन इत्यस्यैव तदर्थपरताया नासम्भव इति।

सञ्जिहीर्षोत्तरकालमित्यादि—ईश्वरेच्छाया नित्यत्वेनात्र ध्वंसघटितोत्तरत्वस्य असम्भवात् आचार्य्यमतं नानुगृहीतं जगदीशेन।

जन्यद्रव्येत्यादि—अत्र यथाक्रमं कालिकविशेषणता-तादात्म्यसम्बन्धावेव प्रतिबध्यप्रतिबन्धकतावच्छेदकसम्बन्धौ। शोभत इति—अन्यथा पूर्वं तादृशादृष्टसत्त्वे पूर्वमपि जन्यद्रव्यानुत्पादसम्भवात् प्रलयस्य कालविपर्य्ययो घटेत इति अशोभनमिदं स्यात्। परं प्रलयाव्यवहितपूर्वक्षणे तथाभूतादृष्टसमुत्पादासम्भवः।

आ सम्यगित्यादि—आचार्य्यास्तु आशब्दस्यावधित्वार्थकत्वमेवोपपादयन्ति। तदुक्तं 'यद्यपि परमाण्वन्त इति वक्तुमुचितं, तथाप्यन्तशब्दस्यावयववचनत्वभ्रमनिरासेन परमाणूनामवधित्वमाविष्कर्त्तुमापरमाण्वन्त इत्युक्तं, तेनैतदुक्तं भवति,-तावदयं विनाशो यावत् परमाणवोऽवसानमिति। न तु यथा दशान्तः पट इति' इति।

पाकजरूपादीत्यादिपदेन कालावच्छेदोपाधितया वर्त्तमानानां महाभूतसंक्षोभप्रभववेगजकर्म्मणां सन्तन्यमानानामुपग्रहः, अन्यथा कालावच्छेदानुपपत्तौ पुनः सृष्ट्यनुपपत्तेरिति बोध्यम्।

मूर्त्तान्तरानुत्पत्त्येत्यादि—तावत्कालपर्य्यन्तं वाय्वतिरिक्तमूर्त्तपदार्थानुत्पादेन इत्यर्थः। अमूर्त्तस्य आकाशादेः सतोऽपि वेगारोधकत्वात् मूर्त्तस्यैव वेगरोधकत्वनियमादिति भावः।

বাধকাভাবাদিতি—তদানীমবস্থিতস্য পবনস্য প্লবনানুকূলত্বাৎ অমূর্ত্তানাঞ্চ পূর্ব্বরীত্যৈব প্লবনবাধকত্বাসম্ভবাদিতি ভাবঃ।

তথা সত্যেবেতি—তৈজসভাগৈঃ পার্থিবভাগসম্বন্ধাদেব সুবর্ণং সম্পদ্যতে, অন্যথা পৃথিবীত্বনিয়তকাঠিন্যাদেঃ তত্রাসম্ভবাদত এব প্রকৃতস্য অণ্ডস্য তৈজসস্যাপি পার্থিবপরমাণুসমুপষ্টম্ভেন এব হিরণ্ময়ত্বমুপপদ্যতে, নান্যথেতি ভাবঃ।

ননু সর্ব্বমেবেদং সর্বজ্ঞসর্বশক্তিমদীশ্বরস্য সিদ্ধৌ সঙ্গচ্ছতে, সৈব নাস্তি, কুতঃ খল্বেবমিতি চেন্ন শরীরানপেক্ষোৎপত্তিকং বুদ্ধিমৎপূর্ব্বকং কারণবত্ত্বাৎ ক্ষিতিঃ সকর্ত্তৃকা কার্য্যত্বাদিত্যাদি-যুক্তয়ঃ, 'দ্যাবাভূমী জনয়ন্দেব একঃ বিশ্বস্য কর্ত্তা ভুবনস্য গোপ্তা' ইত্যাদ্যা আগমাশ্চ তৎসাধকতয়া অনুসর্ত্তব্যাঃ। এতদ্বিস্তরস্তু কিরণাবলী-কুসুমাঞ্জলিগ্রন্থাদাবনুসন্ধেয়ঃ।

---

## ভাষ্যতাৎপর্য্য

ইতঃপূর্ব্বে ক্ষিতি, অপ্, তেজ ও মরুৎ এই চারিটী দ্রব্যের নিরূপণ করা হইয়াছে। ঐ চারিটী দ্রব্যই নিত্য ও অনিত্য দুই ভাগে বিভক্ত। অপর পাঁচটী দ্রব্য কেবল নিত্য, অতএব সৃষ্টি ও সংহার কেবল উক্ত চারিটী দ্রব্যেরই আছে, অন্য দ্রব্যের নাই। এই জন্য এই স্থানেই উক্ত দ্রব্যচতুষ্টয়ের সৃষ্টিসংহারবিধি বিবৃত করা হইতেছে। ক্ষিতি প্রভৃতির নিরূপণপ্রসঙ্গে প্রত্যেক স্থলে উহা বলিতে গেলে গ্রন্থের বিস্তৃতি হইয়া পড়ে, এই কারণে একই উপক্রমে গ্রন্থকার উক্ত বিবরণ করিয়াছেন। ভাষ্যগ্রন্থে মহাভূতপদে দ্ব্যণুকপর্য্যন্ত ভূতপদার্থ গ্রহণ করায় দ্ব্যণুকের সৃষ্টিসংহার নিরূপণ অসঙ্গত হইবে না।

উক্ত সৃষ্টিসংহার-পদের অর্থ সৃষ্টির পূর্ব্ববর্ত্তী সংহার, কারণ 'সৃষ্টি ও সংহার' এই রূপ অর্থ করিলে গ্রন্থকার যে প্রথম সংহারবিধি বিবৃত করিয়াছেন, তাহা অসঙ্গত হয়। কিন্তু প্রথম সৃষ্টি নিরূপণ করিয়া পরেই সংহার নিরূপণ করা উচিত। আর সৃষ্টির পূর্ব্ববর্ত্তী সংহার এই অর্থ করিলে প্রথম সংহারবিধি বলিয়া পরে সৃষ্টি-নিরূপণ করা অন্যায্য হয় না। যদিও কেহ বলেন যে সৃষ্টি ও সংহার উভয়ের নিরূপণই প্রকৃত স্থলে মুখ্যরূপে প্রতিজ্ঞাত হইয়াছে। পরন্তু প্রথম সৃষ্টিক্রমের আদর না

করিয়া সংহার-ক্রমকথনে সৃষ্টিব অনাদিত্ব প্রতিপাদিত হইয়াছে। অর্থাৎ সংহার হইতে গেলে সৃষ্টি অবশ্যই প্রয়োজনীয়, সৃষ্টি না হইলে সংহার হইবে কাহার ? কাজেই প্রথমতঃ সৃষ্টিস্বীকার কবিয়া উক্ত সৃষ্টবস্তুর সংহার বিবরণ করাই যুক্তিসঙ্গত। তথাপি অর্থের ক্রম ও শব্দের ক্রম উভয়বিধ ক্রমের সম্ভাবনা হইলে একটী পরিত্যাগ করা উচিত নহে, এই জন্য জগদীশ প্রকৃত অর্থেরই গ্রহণ করিয়াছেন। উক্ত মতে সৃষ্টির পূর্ব্বকালীন সংহার বলায় মহাপ্রলয়ও খণ্ডিত হইয়াছে। কারণ মহাপ্রলয়ে সমস্ত ভাব কার্য্য বস্তু নষ্ট হইয়া যায় বলিয়া উক্ত অবস্থায় অদৃষ্টেরও সত্তা না থাকায় পবে আর সৃষ্টি হইতে পাবে না। অতএব উক্ত অর্থ করিলে যখন পরে সৃষ্টির কথা লাভ কবা যায়, তাহাতেই বুঝিতে হইবে যে, উক্ত সংহার অবস্থায় অদৃষ্ট রহিয়াছে, তবে আর উহা মহাপ্রলয় হইতে পারে না। কিন্তু উহা খণ্ডপ্রলয় মাত্র। খণ্ডপ্রলয়ে নিখিলজন্য-দ্রব্যমাত্র নষ্ট হইয়া থাকে, অদৃষ্ট প্রভৃতি নষ্ট হয় না, কাজেই পবে সৃষ্টি হইতে আর বাধা হয় না।

জীবগণ নিজ নিজ কর্ম্মবশে উচ্চ উচ্চতর ও উচ্চতম পদ লাভ করিয়া থাকেন, ইহাই শাস্ত্রে নিরূপিত আছে, যেমন কোনও জীব শত অশ্বমেধ যাগ করিয়া ইন্দ্রত্ব লাভ করে, সেই রূপ ফলাকাঙ্ক্ষাশূন্য হইয়া বহুকাল যাবৎ যতিবৃত্তি প্রভৃতি অব-লম্বন করিয়া জীব ব্রহ্মপদও লাভ করিয়া থাকে, পরে ব্রহ্মাব পরিমাণে শতবর্ষকাল জীবিত থাকিয়া তদীয় সৃষ্টিক্রিয়া প্রভৃতি সম্পাদনপূর্ব্বক শতবর্ষের অবসানে মুক্তিলাভ করিয়া থাকে।

আবার কাহারও মতে ভগবান্ পরমেশ্বরই জীবের অদৃষ্টানুসারে সৃষ্টি প্রভৃতি ক্রিয়া সম্পাদনের জন্য ব্রহ্মা, বিষ্ণু ও মহেশ্বরের শরীর অবলম্বন করিয়া সৃষ্টি প্রভৃতি ক্রিয়া সমাপনপূর্ব্বক যখন সকল জীবেব অদৃষ্টকেই কার্য্যজননে নিরুদ্ধবৃত্তি অনুভব করেন, এবং ত্রিতাপতপ্ত জীবের বিশ্রাম কামনা করেন, তখনই সংহারেচ্ছা-প্রণোদিত হইয়া সংসারের সংহার করেন, এবং উক্ত দেহ পরিত্যাগ করিয়া থাকেন। তখন শরীর ও ইন্দ্রিয় প্রভৃতির কারণ পরমাণুসমূহ পবস্পর বিচ্ছিন্ন হইয়া যায় ও পরমাণুই পর্য্যবসিত থাকে।

মনুষ্যেব চারিসহস্রযুগে ব্রহ্মার একদিন ও চারিসহস্রযুগে ব্রহ্মার একরাত্রি হইয়া থাকে। উক্ত রাত্রিকালে প্রলয় হয়, ঐ সময়ে কোনও জন্যদ্রব্য থাকে না। জন্যদ্রব্যের প্রতি ব্রহ্মাব রাত্রি স্বতন্ত্রভাবে প্রতিবন্ধক ইহাই জগদীশের মত।

পৃথিবী জল তেজ ও বায়ু এই চারিটীর প্রথম পৃথিবী, পরে জল অনন্তর তেজ ও তদনন্তর বায়ুর ধ্বংস হয়। উক্তক্রমে সকলের ধ্বংস হইলেই খণ্ডপ্রলয় সিদ্ধ হইয়া থাকে। সেই সময়ে পৃথিবী প্রভৃতির পরমাণুসমূহ পৃথক্ পৃথক্ রূপে অবস্থান করে, এবং ধর্ম্ম অধর্ম্ম ও সংস্কারযুক্ত আত্মা, গগনাদি নিত্যবর্গ ও পাকজ-রূপাদি কতিপয় অনিত্যবর্গ ব্রহ্মার পরিমাণে শতবর্ষকাল উদাসীন ভাবে অবস্থান করে।

তদনন্তর আবার প্রাণিগণের অদৃষ্টানুসারে ভোগসম্পাদনের জন্য পরমেশ্বরের সৃষ্টির ইচ্ছা হইলে সকল আত্মগত অদৃষ্টের ফলোন্মুখতা অপেক্ষা করিয়া পবন-পরমাণুতে ক্রিয়া উৎপন্ন হওয়ায় তাহার পরস্পর সংযোগহেতু দ্ব্যণুকাদিক্রমে মহাবায়ু উৎপন্ন হইয়া আকাশে কম্পিতভাবে অবস্থান করিয়া থাকে। পরে সেই পবনের মধ্যেই জলীয় পরমাণুসমূহ ক্রমে পরস্পর মিলিত হইয়া মহান্ জলনিধিরূপে পরিণত হইয়া বায়ুর তাড়নে অবাধে তরঙ্গিত হইতে থাকে। অনন্তর সেই জলনিধির অভ্যন্তরেই পার্থিব পরমাণুসমূহ হইতে দ্ব্যণুকাদিক্রমে কাঠিন্যযুক্ত মহাপৃথিবী উৎপন্ন হইয়া থাকে। তদনন্তর সেই মহাজলনিধির মধ্যেই তৈজস পরমাণু হইতে দ্ব্যণুকাদিক্রমে মহাতেজোরাশি উৎপন্ন হইয়া তীক্ষ্ণরূপে দীপ্তি বিকীর্ণ করিতে থাকে।

এই রূপে চারিটী মহাভূত উৎপন্ন হইলে পরমেশ্বরের ইচ্ছায় পার্থিবপরমাণুর সহিত তৈজসপরমাণুর মিলনে মহান্ একটী হিরণ্ময় অণ্ড উৎপন্ন হয়। পরমেশ্বর উক্ত অণ্ডের মধ্যে ভূর্লোক ভুবর্লোক স্বর্লোক প্রভৃতি চতুর্দ্দশ ভুবনের সহিত চতুর্ম্মুখ ব্রহ্মাকে সৃষ্টি করিয়া প্রজাসৃষ্টিতে নিযুক্ত করেন। অতিশয় জ্ঞান বৈরাগ্য ও ঐশ্বর্য্যযুক্ত ব্রহ্মা পরমেশ্বরের নিয়োগে প্রাণিগণের কর্ম্মফল জানিয়া কর্ম্মানুরূপ জ্ঞান, ভোগ ও আয়ুঃসম্পন্ন মানসপুত্র মনু দেবর্ষি ও পিতৃগণ এবং মুখ, বাহু, উরু ও চরণ হইতে যথাক্রমে ব্রাহ্মণ, ক্ষত্রিয়, বৈশ্য ও শূদ্র এবং অপরাপর উন্নত অবনত প্রাণিগণ সৃষ্টি করিয়া কর্ম্মানুরূপ ধর্ম্ম, জ্ঞান, বৈরাগ্য ও ঐশ্বর্য্যাদির সহিত যুক্ত করিয়া দিয়া থাকেন।

কেহ বলেন যে ঈশ্বর যেরূপ নিজ ইচ্ছামাত্রেই হিরণ্ময় অণ্ড নির্ম্মাণ করেন, সেই রূপ অপর সহকারী কারণের যোগে ঈশ্বরই ত সকল নির্ম্মাণ করিতে পারেন, তবে আবার অতিরিক্ত সৃষ্টিকর্ত্তা ব্রহ্মা স্বীকার করিবার প্রয়োজন কি? তাহার

উত্তর এই যে শরীরনিষ্পাদ্য কার্য্যসমূহ শরীরশূন্য ঈশ্বরের নির্ম্মাণ করা অসম্ভব, এই জন্যই শরীরযুক্ত একজন কর্ত্তা স্বীকার করিতে হইয়াছে।

---

## प्रशस्तपादभाष्यम्

आकाशकालदिशामेकैकत्वादपरजात्यभावे सति पारिभाषिक्यस्तिस्रः संज्ञा भवन्ति आकाशं कालो दिगिति। तत्र आकाशगुणाः शब्द-संख्या-परिमाण-पृथक्त्व-संयोग-विभागाः। तत्र (१) शब्दः प्रत्यक्षत्वे सति अकारणगुणपूर्वकत्वादयावद्द्रव्यभावित्वादाश्रयादन्यत्रोपलब्धेश्च न स्पर्शवद्विशेषगुणः। बाह्येन्द्रियप्रत्यक्षत्वादात्मान्तरग्राह्यत्वादात्मन्यसमवायादहङ्कारेण विभक्तग्रहणाच्च नात्मगुणः। श्रोत्रग्राह्यत्वाद्विशेषगुणभावाच्च न दिक्कालमनसाम्। (२) पारिशेष्याद् गुणो भूत्वा आकाशस्याधिगमे लिङ्गम्। शब्दलिङ्गत्वाविशेषा(३)देकत्वं सिद्धम्। तदनुविधानात्(४) पृथक्त्वम्। विभववचनात् परममहत्परिमाणम्। शब्द-

---

(१) कुत्रचित् तत्रेति नास्ति।

(२) परिशेषादिति पाठान्तरम्।

(३) लिङ्गाविशेषत्वादिति पाठान्तरम्। कुत्रचित् शब्दलिङ्गाविशेषादित्यपि।

(४) विधानादेकेति विधानादेवेति च पाठान्तरे।

कारणत्ववचनात्(५) संयोगविभागाविति । अतो गुण-वत्त्वा(६)द्नाश्रितत्वाच्च द्रव्यम् । समानासमान-जातीयकारणाभावाच्च नित्यम् । सर्व्वप्राणिनाञ्च शब्दो-पलब्धौ (७) निमित्तं श्रोत्रभावेन । श्रोत्रं पुनः श्रवण-विवरसंज्ञको नभोदेशः (८) शब्दनिमित्तोपभोग-प्रापकधर्म्माधर्म्मोपनिबद्धः । तस्य च नित्यत्वे सति उपनिबन्धकवैकल्याद् वाधिर्य्यमिति ।

[ परिशेषाल्लिङ्गमाकाशस्य—२अ-१आ सू२७ । तत्त्वभावेन—२अ-१आ-२८सू । शब्दलिङ्गाविशेषाद्विशेषलिङ्गाभावाच्च—२अ-१आ-३सू । तदनुविधा-नादेकपृथक्त्वञ्चेति—२अ-१आ-३१सू । विभवान्महानाकाशस्तथा चात्मा—७अ-१आ-२२सू । कारणगुणपूर्व्वकः कार्य्यगुणो दृष्टः--२अ-१आ-२४सू । कार्य्यान्तराप्रादुर्भावाच्च शब्दः स्पर्शवतामगुणः—२अ-१आ-२६सू । परत्र सम-वायात् प्रत्यक्षत्वाच्च नात्मगुणो न मनोगुणः—२अ-१आ-२७सू । संयोगा-द्विभागाच्च शब्दाच्च शब्दनिष्पत्तिः— २अ-२आ०-३१सू । द्रव्यत्वनित्यत्वे वायुना व्याख्याते—२अ-१आ २८सू । श्रोत्रग्रहणो योऽर्थः स शब्दः—२अ-२आ २१सू । इत्येतान्यालम्बनसूत्राणि ]

---

## जगदीशसूक्तिः

गर्गरोगर्त्तादिभेदेन आकाशस्य दण्डलवमुहूर्त्तादिभेदेन कालस्य पूर्वपश्चिमादिभेदेन दिशश्च नानात्वात् आकाशादिजातिमत्त्वेन पृथि-

---

(५) कारणवचनादिति पाठान्तरम् ।

(६) गुणवचनवत्त्वादिति पाठान्तरम् ।

(७) शब्दोपलम्भकेति पाठान्तरम् । क्वचित् शब्दोपलब्धिनिमित्तमिति च दृश्यते ।

(८) नभःप्रदेश इति क्वचित् पाठः ।

व्यादिसंज्ञेव आकाशादिसंज्ञापि द्रव्यत्वावान्तरजातिनिमित्तिकैवेति मतं निरस्यन्नाह आकाशेत्यादि। एकैकत्वं प्रत्येकनिष्ठभेदप्रतियोगित्वं ततोऽपरजातेर्द्रव्यत्वावान्तरजातेरभाववत्त्वे सतीत्यर्थः। तथाच आकाशं न द्रव्यत्वव्याप्यजातिमत् आकाशनिष्ठभेदाप्रतियोगित्वात् यन्नैवं तन्नैवं यथा घट इत्याद्यनुमानात् द्रव्यत्वावान्तरजातिनिरासात् न तन्निमित्तिका आकाशादिसंज्ञा। न च हेतोः स्वरूपासिद्धिः अग्रे प्रतिकर्त्तव्यत्वादिति भावः। पारिभाषिक्य इति—यद्यपि आधुनिकसङ्केतशालिन्येव संज्ञा पारिभाषिकी, प्रकृते च शब्दवत्त्वाद्युपाधिप्रवृत्तिनिमित्तकत्वादौपाधिक्येव संज्ञा वक्तुमुचिता, तथापि उभयावृत्तिधर्मावच्छिन्नसङ्केतवत्त्वमेव पारिभाषिकसंज्ञात्वमित्यभिप्रायेणेदम् अनुगतोपाध्यवच्छिन्नसंज्ञाया एव औपाधिकत्वोपगमात्।

यत्तु निरवच्छिन्नसङ्केतशालित्वमेव पारिभाषिकत्वम् आकाशपदाद्धर्मान्तरानवच्छिन्नस्यैव गगनस्योपस्थितेः, अन्यथा आकाशं शब्दवदित्यादेः पौनरुक्त्यापत्तेः। न चैवं आकाशत्वमित्यादिप्रयोगो न स्यात् प्रकृत्यर्थतावच्छेदकधर्मस्यैव त्वतलाद्यर्थत्वादिति वाच्यं व्यावर्त्तकधर्मस्यैव त्वतलादिना भावप्रत्ययेनाभिधानादित्याचार्य्यमतं, तन्न सुचारु आकाशादिपदात् स्वरूपतो गगनादेर्भाने अनुभवविरोधात् कारणवाधाच्च।

न च शब्दवत्त्वाद्युपलक्षित एव धर्म्मिणि आकाशादिपदस्य शक्तिग्रहात् तादृप्येणान्वयबोधो न तु तदपि शक्यतावच्छेदकमिति वाच्यं घटत्वादेरप्युक्तरीत्या शक्यतावच्छेदकत्वहान्यापत्तेः। सह प्रयोगस्य [पिकः कोकिल इत्यादिवत्] आकाशपदवाच्यः।शब्दवानित्यर्थकत्वेनाप्युपपत्तेरिति संक्षेपः।

तत्र आकाशादित्रिकमध्ये। अत्र शब्दः स्वत एव, संख्यादिस्तु विशेषणान्तरावच्छिन्न एव आकाशस्य वैधर्म्यमित्यग्रे प्रतिपादयिष्यते।

अथ आकाशे धर्म्मिणि प्रत्यक्षं न मानम् तदसत्त्वात्, आरक्त-माकाशं धवलमाकाशमित्यादिचाक्षुषेण प्रभामण्डलस्यावगाहनात्, अन्यथा रूपस्यापि तत्रोपेयत्वे षड्गुणत्वव्याघातापत्तेः। किन्तु शब्दो द्रव्याश्रितो गुणत्वादित्यनुमानमेव तत्र मानमुपेयम्। तच्च पृथिव्यादिद्रव्यवृत्तित्वेनाप्युपपन्नं नातिरिक्तसाधकमतः पृथिव्यादिगुणत्वे बाधकमाह शब्द इत्यादिना। शब्दो न स्पर्शवद्विशेषाणां पृथिव्यादिचतुर्णां गुण इति साध्यार्थः।

प्रत्यक्षत्वे सति अकारणगुणपूर्वकत्वादिति—परत्वापरत्वयोर्व्यभि-चारवारणाय सत्यन्तं प्रतिनियतेन्द्रियग्राह्यत्वे सतीत्यर्थकम्। तन्मात्रञ्च रूपरसादौ व्यभिचारि, अतो विशेष्यदलम्, स्वाश्रयसमवायिकारण-वृत्ति-सजातीयगुणपूर्वकजातीयान्यत्वादिति तदर्थः।

हेत्वन्तरमाह अयावदिति—स्वाश्रयनिष्ठध्वंसाप्रतियोगिवृत्तिगुण-त्वावान्तरजातिशून्यत्वादिति तदर्थः। हेत्वन्तरमाह आश्रयादिति—स्वाश्रयाविषयकसाक्षात्कारविषयत्वात् स्वाश्रयविषयकसाक्षात्कारविष-यान्यगुणत्वादिति वार्थः।

अथ शब्दो यदि न पृथिव्यादिगुणः कथं तर्हि वीणायां ध्वनि-रित्याकारको व्यवहारः? सत्यं शरीरे सुखमित्यादाविव वीणादेरव-च्छेदकतामात्रेण तथा प्रत्ययात्। उत्तानास्तु कथितहेतूनामप्रयोजक-त्वाद् वीणादिगुण एव शब्दः, शब्दविशेषं प्रति वीणात्वादिना हेतुत्वस्य आवश्यकत्वे समवायिकारणतायामेव तत्पर्य्यवसानस्य लाघवेनौचि-त्यात्। न च वीणागुणस्य कर्णासन्निकृष्टत्वेन श्रावणप्रत्यक्षानुपपत्तिः वीणावच्छेद्यशब्दव्यक्तेरपि तथात्वेन तन्मतेऽप्येतद्दोषस्य तुल्यत्वात्, वीचीतरङ्गन्यायेन वीणानवच्छेद्यशब्दस्यैव कर्णावच्छेद्यतायाः सिद्धान्त-सिद्धत्वात्, वीणावच्छेद्यशब्दस्यैव तत्तत्कर्णपर्य्यन्तव्यापित्वोपगमे तु वीणासमवेतशब्दस्यैव तत्तत्कर्णावच्छेद्यत्वस्वीकारस्यापि अदुष्टत्व-

सम्भवात्, तत्तत्कर्णावच्छिन्नशब्दस्य ग्रहं प्रति तत्तत्कर्णत्वेन हेतुत्व-कल्पनयैव अतिप्रसङ्गभङ्गे शब्दप्रत्यक्षं प्रति श्रवणसमवायस्य हेतुत्वे मानाभावादिति प्राहुः।

अथ मास्तु पृथिव्यादिचतुर्णां गुणः शब्दः, किन्तु आत्मगुण एव भविष्यति, तथापरतिरिक्तमाकाशं नायातमेव इत्यत आह वाह्येति—मानसान्यसाक्षात्कारविषयत्वादित्यर्थः। नात्मगुण इत्यग्रेतनेनान्वयः। शब्दो न बुद्धिमद्गुण इति तदर्थः। तेन आत्मत्वजातिशून्येश्वरीय-गुणत्ववादिनां न सिद्धसाधनस्यावकाशः।

हेत्वन्तरमाह आत्मान्तरेति—आत्मानमन्तराकृत्य ग्राह्यत्वात् आत्माविषयकप्रत्यक्षविषयत्वादिति यावत्। आत्मद्वयग्राह्यत्वादित्यर्थस्तु न युक्तः शब्दमात्रस्यैव पुरुषद्वयावच्छेद्यत्वेन स्वरूपासिद्धत्वादिति ध्येयम्।

आत्मन्यसमवायात् आत्मसमवेतान्यत्वात्। आत्मगुणान्यत्वस्यैव साध्यत्वान्न साध्याविशेषः। अहङ्कारेणैवेति—आत्मधर्म्मिकस्वाश्रयान्यत्व-प्रकारकप्रमाविषयत्वादित्यर्थः, अहं न शब्दवानिति प्रतीतेः प्रमात्वस्य सर्व्वसिद्धत्वादिति भावः।

मास्तामात्मगुणः शब्दः, तथापि दिगादिगुण एव स्यादत आह श्रोत्रेति। न दिक्कालमनसां प्रत्येकस्य गुणः श्रोत्रग्राह्यत्वादिति गुण-शब्दस्यानुषङ्गेण प्रयोगार्थः। श्रोत्रपदं ग्रहणस्य लौकिकत्वलाभार्थम्। विशेषगुणत्वाच्च चक्षुर्ग्राह्यगुणत्वव्याप्यजातिशून्यगुणत्वादित्यर्थः। पारि-शेष्यात् पृथिव्याद्यष्टद्रव्यगुणत्वबाधात्। गुणो भूत्वेति—शब्दो द्रव्यस्य गुणः गुणत्वादित्यनुमानमेव पृथिव्याद्यष्टगुणत्वबाधान् तदन्यद्रव्यगुणत्वं साधयदतिरिक्ताकाशस्य साधकमित्यर्थः।

ननु संख्या पृथिव्यादावपि सत्त्वात् कथमाकाशस्य वैधर्म्म्यमत आह (१) शब्दलिङ्गत्वाविशेषादिति—शब्दस्य यल्लिङ्गत्वं व्याप्यत्वं तद-

(१) शब्दलिङ्गादीति पाठान्तरम्।

विशेषादेकत्वं सिद्धं वैधर्म्यत्वेन। तथा च शब्दव्याप्यसंख्यावत्त्वमेव वैधर्म्यं, तच्च न पृथिव्यादाविति भावः। यद्यपि शब्दलिङ्गत्वादित्येव वक्तुमुचितं, तथापि पृथक्त्वसंख्यायामपि क्वचित् शब्दव्याप्यत्वमित्यर्थ-लाभार्थं शब्दलिङ्गत्वाविशेषादित्युक्तम्। अत एव शब्दानुविधाय्येव पृथक्त्वं वैधर्म्यमाह तदनुविधानादिति। तस्य शब्दस्य अनुविधानात् व्याप्यत्वात् पृथक्त्वं वैधर्म्यत्वेन सिद्धमित्यर्थः।

ननु परिमाणं द्रव्यमात्रे अतिप्रसक्तमतः शब्दसमवायिनिष्ठपरि-माणमेव आकाशस्य वैधर्म्यं वाच्यं, तच्चाप्रसिद्धं गगनस्य परिमाणवत्त्वे प्रमाणाभावादत आह(२) विभव(३)वचनादिति—महानाकाशस्तथा चात्मेति(४) सूत्रेण गगनस्य विभुत्ववचनादित्यर्थः, परममहत्त्वं परि-माणं सिद्धमिति पूर्वेणान्वयः।

संयोगविभागयोरपि द्रव्यमात्रे अतिप्रसक्तत्वादाह शब्देति। संयोगविभागपदाभ्यां शब्दासमवायिकारणयोः संयोगविभागयोरभि-धानात् संयोगविभागौ वैधर्म्यं, शब्दासमवायिकारणस्य मूर्त्तेन सह संयोगस्य विभागस्य गगनादन्यत्र असत्त्वादिति भावः।

यद्यपि प्रागुक्तधर्म्मिग्राहकमानेनास्य द्रव्यत्वं सिद्धं, तथापि संयोगादि-मत्त्वादपि तत् साधयितुं शक्यत इति तदप्याह अत इति—संयोगादि-मत्त्वादित्यर्थः। अत्र हेत्वन्तरमाह गुणवत्त्वादिति—अग्रिम-चकारयोजनया गुणवत्त्वाच्चेत्यर्थः। द्रव्यं द्रव्यत्ववत्। नित्यत्वे प्रमाण-माह अनाश्रितत्वादिति—असमवेतभावत्वादित्यर्थः। नित्यमित्यग्रे-तनेनान्वयः। अनाश्रितत्वादित्यस्य विभुत्वादित्यर्थः। तथा च द्रव्य-त्वस्यैव साधकोऽयं हेतुरिति यथाश्रुतमेव न्याय्यमिति वदन्ति।

तस्य नित्यत्वं साधयति समानेति। कारणमत्र समवायिकारणं,

---

(२) प्रमाणाभावादाहेति पाठान्तरम्। (३) विभु इति पाठान्तरम्।

(४) तथा चात्मा चेति इति पाठान्तरम्।

तच्च आकाशस्य सजातीयं विजातीयञ्च नास्ति। नहि आकाश-सजातीयमाकाशान्तरमस्ति, नापि तद्विजातीयं पृथिव्यादिकं तत्-समवायिकारणं घटादिकारणकस्य रूपादेरिव गुणत्वस्य कर्म्मत्वस्य वा प्रसङ्गात्। पृथिव्यादेस्तु सजातीयपृथिव्यादिरिव गुणकर्म्मणोस्तु विजातीयं द्रव्यमेव समवायिकारणम्।

तस्य इन्द्रियप्रकृतित्वं दर्शयति सर्वप्राणिनामिति। ननु विभुन-स्तस्य सर्वप्राणिनां शब्दोपलब्धिनिमित्तत्वे सर्वेषामेव सर्वशब्दोपलब्धि-प्रसङ्ग इत्यत आह श्रोत्रभावेनेति। ननु तथापि स दोषः, तस्य विभुनः श्रोत्रभावादित्यत आह श्रोतं पुनरिति। ननु श्रवणविवरसत्त्वे कथं कश्चिद् वधिर इत्यत आह शब्दनिमित्तेति। उपभोग्यवीणादिशब्दा विषयतया निमित्तानि यस्य तादृशो य उपभोगस्तत्प्रापकाभ्यां धर्म्माधर्म्माभ्याम् उपनिबद्ध इत्यर्थः। तथा च तादृशधर्म्माधर्म्मरहितस्य तादृशविवरसत्त्वेऽपि वाधिर्य्यमित्याह तस्य चेति।

---

## सूक्तिदीपिका

अथ किमाकाशादिसंज्ञाया नैमित्तिकत्वं वा पारिभाषिकत्वं वा औपाधि-कत्वं वेति विचारयितुं पूर्वपक्षमुपन्यस्यन् पारिभाषिकतया उपसंहरति गर्गरी-त्यादिना।—गर्गरी घटश्चेत्यनर्थान्तरम्। तथाहि यः खलु गर्गर्य्यादिभेदेन आकाशादिभेदः समुपलभ्यते, स उपाधिकृत एव, न तु वास्तवः, अत आकाशत्वादौ नित्यानेकसमवेतत्वरूपजातिलक्षणसमन्वयाभावात् तदवच्छिन्न-सङ्केतवती आकाशादिसंज्ञा न नैमित्तिकी, परमाकाशत्वादेरुभयावृत्तिधर्म्मतया तदवच्छिन्नसङ्केतवत्त्वात् पारिभाषिक्येव। तदुक्तं स्वयमेव जगदीशेन शब्द-शक्तिप्रकाशिकायां 'जात्यवच्छिन्नसङ्केतवती नैमित्तिकी मते'ति। 'उभया-वृत्तिधर्म्मेण संज्ञा स्यात् पारिभाषिकी' इति च। औपाधिकत्वमपि आका-शत्वादेरेकमात्रवृत्तिधर्म्मतयैव शक्यं निरसितुम्। अत एव शब्दशक्तिप्रकाशि-कायां 'शब्दादिकन्तु सखण्डत्वेन उपाधिरपि नानुगतो द्वितयावृत्तित्वादतः

पारिभाषिके नातिप्रसङ्ग' इत्युक्तम्। भूतादिसंज्ञैव 'औपाधिकी त्वनुगतोपाधिना या प्रवर्त्तेत' इति लक्षणसमन्वयादौपाधिकी भवति इति विभाव्यम्।

यद्यपि कालत्वदिक्त्वयोर्जातित्वनिराकरणं तत्तन्निरूपणावसरे कर्त्तव्यं, तथापि लाघवानुरोधेन प्रसङ्गादत्रैवोक्तमिति ध्येयम्।

तत इति पञ्चम्यर्थो हेतुत्वं, तच्च अपरजातेरभावेऽन्वेति। सति सप्तम्याः प्रयोज्यत्वमर्थः, स चार्थः पारिभाषिकत्वे अन्वेति। तथाहि आकाशनिष्ठभेदाप्रतियोगित्वव्याप्यापरजात्यभावप्रयोज्यमाकाशपदस्य पारिभाषिकत्वमित्यर्थः।

ननु कथमिदं सङ्गच्छते आकाशे सत्तावान्तरद्रव्यत्वजातेः सत्त्वेन व्यभिचारादित्यतः अपरजातिपदस्य द्रव्यत्वावान्तरजातिरूपमर्थमनुसन्धत्ते द्रव्यत्वेत्यादिना। तथा च सत्तावान्तरद्रव्यत्वजातेराकाशादौ सत्त्वेऽपि द्रव्यत्वावान्तरजातेरसत्त्वेन न क्षतिः। तदुक्तं मुक्तावल्यां 'आकाशकालदिशामेकव्यक्तिकत्वादाकाशत्वादिकं न जातिः, किन्तु आकाशत्वं शब्दाश्रयत्वम्' इति।

आकाशनिष्ठभेदाप्रतियोगित्वहेतोः प्रकृते पक्षमात्रवृत्तित्वेन साध्यहेत्वोः सहचारग्रहासम्भवाद् व्यतिरेकमुखेन व्याप्तिमुपसंहरति यन्नैवमित्यादिना।

हेतोरिति—आकाशनिष्ठभेदाप्रतियोगित्वहेतोरित्यर्थः।

स्वरूपासिद्धिरिति—घटादिभेदेन आकाशस्य भेदसत्त्वादाकाशनिष्ठभेदाप्रतियोगित्वस्य आकाशे अभावादित्यभिप्रायः।

अत्र इत्यादि—शब्दलिङ्गत्वाविशेषादेकत्वं सिद्धमित्यत्रेत्यर्थः। प्रतिकर्त्तव्यत्वादिति—अस्य दोषस्य निराकरिष्यमाणत्वादित्यर्थः। तथाहि यत आकाशादेर्घटादिभेदाद् भेदो न वास्तवः, परमौपाधिक एव, अतो न प्रकृतसाध्यसाधको हेतुः स्वरूपासिद्ध इति भावः।

यद्यपीत्यादि—ग्रन्थोऽयं 'यद्वाधुनिकसङ्केतशालि स्यात् पारिभाषिक'मिति पारिभाषिकलक्षणाभिप्रायमूलः। तन्मते आकाशपदादेरौपाधिकत्वमेवेति स्वयं तत्राप्युक्तं जगदीशेन।

अन्यथेति—गगनपदात् शब्दवत्त्वरूपधर्मान्तरावच्छिन्नस्य उपस्थितिपरिकल्पने इत्यर्थः। पौनरुक्त्यापत्तेरिति—घटो घट इत्यादिस्थल इव आकाशं शब्दवदित्यत्रापि उद्देश्यतावच्छेदकविधेयतावच्छेदकयोरैक्येन शाब्दबोधानुप-

पत्तेः उद्देश्यतावच्छेदकतासम्बन्धेन शाब्दबोधे अभेदसम्बन्धावच्छिन्नविधेयता-वच्छेदकभेदस्य कारणतायाः क्लृप्तत्वेन प्रकृते धर्म्मितावच्छेदकतया भाते शब्द-वत्त्वे अभेदसम्बन्धावच्छिन्नविधेयतावच्छेदकशब्दभेदलक्षणकारणबाधादिति भावः।

व्यावर्त्तकेत्यादि—तथाहि स्वप्रकृत्यर्थतावच्छेदक एव त्वतलाद्यर्थ इति न नियमः येन निरवच्छिन्नार्थबोधकाकाशपदात् त्वतल्प्रत्ययादिप्रयोगो नोपपद्यते, किन्तु व्यावर्त्तकधर्म्म एव, शब्दवत्त्वस्य च आकाशव्यावर्त्तकधर्म्मतया आकाश-पदोत्तर-त्वतल्प्रत्ययस्य तत्परतया एव उपपत्तेर्न प्रयोगव्याघातापातः। आचा-र्य्यमतमिति—तदुक्तमाचार्य्यैः—'शब्दाश्रयत्वस्योपलक्षणतया तटस्थत्वात् अय-मसौ देवदत्त इत्यत्रेदन्तावत्, अन्यथा शब्दगुणमाकाशमिति सहप्रयोगो न स्यात्। यद्येवमाकाशादिशब्देभ्यः परस्य त्वतलादेर्निरर्थकत्वमापद्येत इति चेत् न आकाशस्य स्वरूपमितिवदौपचारिकत्वात् व्यावृत्तिपरत्वा-द्वेति' इति।

अनुभवेत्यादि—तथाहि गगनपदाद् गगनबोधानन्तरं शब्दाश्रयं प्रत्येमी-त्याद्यनुभवापलापप्रसङ्गादिति। अतस्तादृशानुभव एव गगनपदस्य अवच्छि-न्नार्थवाचकतालिङ्गमिति भावः। अथ तादृशानुभवे विप्रपन्नं प्रत्याह कारण-बाधाच्चेति, निरवच्छिन्ने शक्तिग्रहरूपकारणविरहादित्यर्थः।

ताद्रूप्येणेत्यादि—ननु उपलक्षणप्रकारेण तत्र तत्रान्वयबोधस्वीकारे यस्य कस्याप्याकाशांशे उपलक्षणस्य सर्वत्रानियमेन भानमापद्येतेति चेन्न यत्र यद्धर्म्मं धर्म्मितावच्छेदकीकृत्य शाब्दबोधविषयत्वेन सङ्केतविषयत्वग्रहस्तद्धर्म्म-प्रकारक एव बोधस्तत्र समुत्पद्यत इति नानियमः शङ्कनीयः। स्वयमन्यदूह्यम्।

अवच्छिन्नशक्तिपक्षे आकाशं शब्दवदित्यभेदान्वयबोधानुपपत्तिदोषमुद्धर्त्तु-माह—सह प्रयोगस्येत्यादि;—तथाहि यथा पिकः कोकिल इत्यादौ पिक-कोकिलशब्दयोरभिन्नार्थत्वेऽपि कोकिलादिशब्दस्य कोकिलादिपदवाच्यपरतया पौनरुक्त्यप्रयुक्ता न शाब्दबोधानुपपत्तिस्तथैव प्रकृतेऽपि आकाशादिपदस्य आकाशादिशब्दवाच्यपरतया नानुपपत्तिरिति भावः। अत एव किरणावली-भास्करे पद्मनाभमिश्राः 'सहप्रयोगस्तु पिकः कोकिल इतिवदुपपद्यत इति तत्त्व'मिति प्राहुः।

शब्दः स्वत एवेति—आकाशस्य वैधर्म्यमित्यग्रेणान्वेति। स्वत एवेति विशेषणान्तरानवच्छिन्न इत्यर्थः। तथाहि शब्दस्य आकाशमात्रवृत्तितया केवल-तद्वत्त्वस्यैव वैधर्म्यत्वोक्तिसम्भवादिति भावः। संख्यादिस्त्विति तु शब्दो भिन्नक्रमे। विशेषणान्तरावच्छिन्न इति—शब्दव्याप्यसंख्यावत्त्वादिरूपतया सामानाधिकरण्यसम्बन्धेन शब्दविशिष्टसंख्यादिरूपतया वा संख्यादिकमाकाश-वैधर्म्यं, न केवलसंख्यादिः, तस्य पृथिव्यादिसाधारणतया व्यभिचारादिति भावः।

ननु सिद्धे धर्म्मिणि धर्म्मचिन्ता, नासिद्धे, तत्कुतस्तस्यैव सिद्धिरित्याशङ्कते अथेत्यादिना। तथाहि प्रत्यक्षेण प्रमाणेन नाकाशसिद्धिरिति भावः।

प्रभेत्यादि—तदुक्तमाचार्य्यैः—'कथं तर्हि इह पक्षी नेह पक्षीति प्रत्यय इति चेत् आलोकमण्डलमाश्रित्येति ब्रूमः। तथापीहालोको नेहालोक इति कथमिति चेत् तदवयवानाश्रित्येति यत्किञ्चिदेतत्' इति।

अन्यथेति—निरुक्तचाक्षुषप्रत्यक्षस्य आकाशविषयकत्वाभ्युपगमे इत्यर्थः। रूपस्यापीति—संख्यादिगुणपञ्चकस्येव चाक्षुषेणावश्यमपेक्षणीयस्य उद्भूतरूप-वत्त्वस्येत्यर्थः।

स्पर्शवद्विशेषाणामित्याद्यर्थकरणेन विषयगुणत्वनिषेधेन तदीयसामान्य-गुणत्वप्रसक्तिशङ्कापि निरस्ता।

शब्दस्य स्वकारणगगनगुणशब्दान्तरादिपूर्वकत्वात् स्वरूपासिद्धिरिति अकारणेत्यादेः स्वाश्रयेत्याद्यर्थविवरणम्। स्वाश्रयस्य समवायेन स्वाधिकरणस्य यत् समवायिकारणं तद्वृत्तीत्याद्यर्थः। न तु स्वाश्रयो यत् समवायिकारण-मित्यादिः, तथात्वे स्वाश्रयेत्यस्य वैयर्थ्यात् स्वरूपासिद्धितादवस्थ्याच्च। प्रति-योगिप्रसिद्धिश्च घटरूपादौ सुकरा, तस्य स्वाश्रयघटादिसमवायिकारणवृत्ति-स्वसजातीयकपालादिरूपात्मकगुणपूर्व्वकजातीयत्वात्। आकाशस्य नित्य-तया शब्दाश्रयीभूतगगनस्य कारणविरहादेव निरुक्तगुणपूर्वकजातीयत्वस्य शब्दे असम्भवात् स्वपदेन तस्योपादातुमशक्यतया न सम्भावितस्वरूपासिद्धि-रिति भावः।

न च तथापि गुणत्वमादाय शब्दस्य कारणगुणपूर्वकरूपादिजातीयतया स्वरूपासिद्धिस्तदवस्थेति वाच्यं गुणत्वव्याप्यजात्यैव प्रकृते साजात्यस्य विव-

चितत्वात्। स्वत्वस्य प्राचामननुगतत्वेन स्वपदेन रूपाद्युपग्रहे न रसादौ स्पर्शवद्विशेषगुणे व्यभिचारः। स्वत्वस्य प्रत्येकविश्रान्तत्वमभ्युपगच्छतां नव्यानान्तु स्वाश्रयसमवायिकारणवृत्तितज्जातीयगुणपूर्वकं यद्‌यत् स्वं तत्तदन्यतमजातीयान्यत्वमर्थः। तेन रसादेरपि तदन्यतमान्तर्गततया तज्जातीयान्यत्वस्य तत्रासत्त्वान्न व्यभिचारशङ्कापि। पाकजरूपादेः कारणगुणपूर्वकत्वविरहेण तदन्यतमानन्तर्गततया तथैव व्यभिचार इति तादृशान्यतमान्यत्वनिवेशमनादृत्य तज्जातीयान्यत्वपर्य्यन्तानुसरणम्। अन्यत् स्वयमूहनीयम्।

स्वाश्रयनिष्ठेत्यादि—शब्दस्यापि स्वाश्रयनिष्ठध्वंसाप्रतियोगिपरममहत्परिमाणादिवृत्तिसत्तागुणत्वजातिमत्त्वात् स्वरूपासिद्धिरिति तद्वारणाय जातौ गुणत्वावान्तरत्वं विशेषणमुपगृहीतम्। जातिशून्यत्वञ्च समवायसम्बन्धावच्छिन्नप्रतियोगिताकजात्यभाव एव विवक्षणीयः, अन्यथा कालिकेन तादृशजातेः शब्दवृत्तितया स्वरूपासिद्धेः संयोगादिसम्बन्धावच्छिन्नप्रतियोगिताकतदभावमादाय रूपादौ व्यभिचारापत्तेश्च।

स्वाश्रयाविषयकेत्यादि—अत्र स्वाश्रयत्वं समवायेन विवक्षणीयम्, अन्यथा शब्दस्यैव कालिकेन सम्बन्धेन स्वाश्रयतया तदविषयकसाक्षात्कारविषयत्वस्य स्वस्मिन्नसम्भवेन स्वरूपासिद्धितादवस्थ्यादिति। रूपादिविषयकज्ञानमात्रस्य स्वाश्रयविषयकत्वानियमेन स्वाश्रयाविषयकज्ञानविषयत्वहेतोर्व्यभिचारप्रसङ्गेन साक्षात्कारपर्य्यन्तानुधावनम्।

स्वाश्रयविषयकेत्यादि—तथाहि आकाशस्य साक्षात्कारविषयत्वविरहेण शब्दविषयकसाक्षात्कारस्य आकाशाविषयकतया प्रकृतहेतुसमन्वयः।

स्वाश्रयनिष्ठविषयतानिरूपकतावच्छेदकलौकिकसाक्षात्कारत्वावच्छिन्ननिरूपितविषयताया एव प्रकृते प्रतियोगितावच्छेदकतया प्रवेशात् उपनयसन्निकर्षादिना शब्दविषयकप्रत्यक्षे आकाशस्य भानसम्भवेऽपि न क्षतिः, तादृशप्रत्यक्षनिरूपितस्वाश्रयविषयतायाः तादृशसाक्षात्कारत्वावच्छिन्नानिरूपितत्वात् साक्षात्कारत्वव्यञ्जकविषयताया एव तथात्वाभ्युपगमेन उपनयसन्निकर्षादिप्रयोज्यविषयतायास्तादृशत्वासम्भवात्। साक्षात्कारित्वव्यञ्जकत्वं वा विषयताविशेषणं देयम्।

अवच्छेदकतामात्रेणेति—तथाहि वीणायामित्यत्र सप्तम्यर्थो नाधिकरणत्वं,

किन्तु अवच्छेदकत्वमेव, इत्थञ्च वीणायां ध्वनिरित्यस्य वीणावच्छेद्यो ध्वनिरित्येवार्थः, न तु वीणावृत्तिर्ध्वनिरिति भावः।

मानसान्येत्यादि—अत्रापि विषयतायां लौकिकसाक्षात्कारत्वावच्छिन्ननिरूपितत्वं साक्षात्कारित्वव्यञ्जकत्वं वा हेतुघटकमुपगन्तव्यमन्यथा मानसान्यसाक्षात्कारेऽपि उपनयसन्निकर्षादिना ज्ञानादेर्भानस्य अप्रत्यूहतया व्यभिचारस्य दुर्निवारतापत्तेः। ज्ञानादेर्मानसान्यानुमित्यादिज्ञानविषयतया तथैव व्यभिचार इति साक्षात्कारपदमित्यादि ध्येयम्।

तेनेति—तादृशार्थकरणेनेत्यर्थः। तथाहि बुद्धिमत्त्वस्य जीवात्मपरमात्मोभयसाधारणतया ईश्वरीयगुणत्वस्यापि प्रकृते निषेधप्रत्ययादिति भावः।

लौकिकत्वलाभार्थमिति—अन्यथा दिगादिगुणस्यापि अलौकिकप्रत्यक्षविषयतया व्यभिचारात्। एतद्दोषविरहे ग्राह्यत्वमात्रेण एव हेतुना साध्यसिद्धिचारितार्थ्यात्।

शब्दस्येत्यादि—शब्दस्य यल्लिङ्गत्व व्याप्यत्वमित्यादि—जगदीशव्याख्यानलाभात् शब्दलिङ्गत्वाविशेषादित्येव भाष्यपाठो जगदीशाभिमत इत्याभाति। परे तु शब्दलिङ्गाविशेषादिति पाठमादृत्यापि लिङ्गपदस्य धर्म्मपरत्वेन तथा व्याख्यानमुपपादयन्ति। तन्न समीचीनम्, यत एव स्वयं जगदीशेन 'लिङ्गत्वाविशेषादित्युक्तम्' इत्यस्य उक्तत्वात्।

परममहत् परिमाणमिति मूलनिर्देशो धर्म्मिपरः, अत एव परममहत्त्वं परिमाणं सिद्धमिति जगदीशेनार्थो निरुक्तः। परममहतः परिमाणमिति षष्ठीतत्पुरुषाद्वा प्रकृतसिद्धिः।

द्रव्यमित्यादि—समवायसम्बन्धस्य साध्यताघटकसंसर्गतामभिप्रेत्य द्रव्यमित्यस्य द्रव्यत्ववदित्यर्थविवरणम्। तेन द्रव्यत्वविषयकज्ञानस्यापि विषयितया द्रव्यमित्याकारकतया नार्थान्तरमिति प्राहुः।

असमवेतेत्यादि—असमवेतत्वस्य ध्वंसप्रागभावयोरपि सत्त्वात् तन्मात्रस्य हेतोर्व्यभिचार इति भावत्वपर्य्यन्तानुधावनम्।

---

## ভাষ্যতাৎপর্য্য

সৃষ্টি ও সংহার নিরূপণের পর উদ্দেশক্রমলব্ধ আকাশ পদার্থের নিরূপণ করিতে যাইয়া প্রথমতঃ আকাশ শব্দটী পারিভাষিক বা নৈমিত্তিক এই আলোচনা করা উচিত। যে শব্দ নিজ শক্তি দ্বারা জাতিবিশিষ্টের বোধক হয়, তাহাকে নৈমিত্তিক ও যে শব্দ শক্তিদ্বারা একব্যক্তিমাত্রে বর্ত্তমান ধর্ম্মবিশিষ্টের বোধক হয়, তাহাকে পারিভাষিক কহে। ঘট গর্ত্ত প্রভৃতি ভেদে আকাশ ভিন্ন বলিয়া প্রতীত হইলেও উহা বস্তুতঃ অভিন্ন, কেবল ঘটাদিরূপ উপাধিভেদেই উহার ভেদ প্রতীত হইয়া থাকে ; অতএব আকাশত্ব অনেকসমবেত না হওয়ায় উহা যখন জাতি নহে, তখন আকাশত্ববিশিষ্টবোধক আকাশশব্দ নৈমিত্তিক হইতে পারে না ; কিন্তু আকাশত্ব কেবল এক ব্যক্তিতেই বর্ত্তমান বলিয়া উক্ত আকাশত্ববিশিষ্টের বোধক আকাশপদ পারিভাষিক সংজ্ঞা বুঝিতে হইবে। ঐ রূপ কালপদার্থের দণ্ড মুহূর্ত্তাদিভেদে ভেদপ্রতীতি এবং দিকের পূর্ব্ব পশ্চিমাদি ভেদে ভেদপ্রতীতিও ঔপাধিক, বাস্তবিক নহে, অতএব কালত্ব ও দিকৃত্ব ধর্ম্মও একৈকমাত্রবৃত্তি বলিয়া কাল ও দিক্ সংজ্ঞাও পারিভাষিক। কাল ও দিকের নিরূপণ প্রসঙ্গে কালশব্দ ও দিক্‌শব্দের পারিভাষিকত্ব পৃথক্ পৃথক্ রূপে বলিতে গেলে গ্রন্থগৌরব হয়, এই জন্য এইস্থানে একই প্রসঙ্গে উক্ত ব্যাখ্যা ভাষ্যকার করিয়াছেন।

শব্দ, সংখ্যা, পরিমাণ, পৃথক্ত্ব, সংযোগ ও বিভাগ এই ছয়টী গুণ আকাশের বৈধর্ম্ম্য। তন্মধ্যে শব্দ স্বতই আকাশের বৈধর্ম্ম্য, সংখ্যা প্রভৃতি অপর পাঁচটী পৃথিবী প্রভৃতিতেও বর্ত্তমান হওয়ায় কেবল সংখ্যাদি আকাশের বৈধর্ম্ম্য হইতে পারে না, পরন্তু শব্দব্যাপ্যসংখ্যা শব্দব্যাপ্যপরিমাণাদিকেই আকাশের বৈধর্ম্ম্য বলিতে হইবে।

কেহ বলেন যে শব্দ বীণাশঙ্খ প্রভৃতি স্পর্শবৎ পদার্থের গুণ, উহা আকাশের গুণ নহে। তাহার প্রত্যুত্তর দিবার জন্য ভাষ্যকার তিনটী হেতুর উপন্যাস করিয়া শব্দ স্পর্শবৎপদার্থ পৃথিবী জল তেজ ও বায়ুর গুণ নহে ইহাই ব্যবস্থাপন করেন। তাহার প্রথম প্রয়োগ এইরূপ যথা,—যে হেতু শব্দ প্রত্যক্ষ অথচ অকারণগুণপূর্ব্বক অর্থাৎ স্বাশ্রয়ের সমবায়িকারণে বর্ত্তমান সজাতীয়গুণপূর্ব্বকজাতীয় নহে, অতএব উহা স্পর্শবৎ পদার্থের গুণ নহে। যে

সকল বস্তুতে উক্ত হেতু আছে, তাহা স্পর্শবৎ পদার্থের গুণ হয় না। শব্দের আশ্রয় আকাশ নিত্য বলিয়া স্বপদে শব্দ ধরিলে স্বাশ্রয়ের সমবায়িকারণই অসিদ্ধ হয়, অতএব স্বপদে শব্দ ধরিতে না পারায় উক্তরূপ হেতু শব্দে থাকিতে বাধা হয় না। যাহারা স্বাশ্রয়পদে বীণাশঙ্খ প্রভৃতি গ্রহণ করেন, তাহাদের মতেও স্বাশ্রয়ের সমবায়িকারণে অবয়বে শব্দ না থাকায় পক্ষে হেতু থাকিতে কোনও প্রতিবন্ধক দেখা যায় না। বীণাপ্রভৃতির অবয়বে যে শব্দ তাহা বীণাশব্দের কারণ ইহা কোনও রূপেই স্বীকার করা চলে না। পরমাণুরূপে অকারণগুণপূর্ব্বকত্ব থাকিলেও উহা প্রত্যক্ষ নহে, অতএব প্রত্যক্ষপদ দ্বারা উক্ত স্থলে ব্যভিচার বারণ করা হইয়াছে। জগদীশ পরত্ব ও অপরত্বে ব্যভিচার বারণের জন্য উক্ত বিশেষণ গ্রহণ করিয়াছেন। উহার অর্থ প্রতিনিয়ত ইন্দ্রিয়গ্রাহ্যত্ব, পরত্ব ও অপরত্ব প্রতিনিয়ত ইন্দ্রিয়গ্রাহ্য নহে, কারণ উহা যেমন চক্ষুরিন্দ্রিয় দ্বারা গৃহীত হয়, সেইরূপ ত্বগিন্দ্রিয়াদি দ্বারাও গৃহীত হইয়া থাকে। দ্বিতীয় হেতুদ্বারা প্রয়োগ এইরূপ যথা—যে বস্তুতে অযাবদ্‌দ্রব্যভাবিত্ব অর্থাৎ প্রত্যক্ষত্ব এবং স্বাশ্রয়বৃত্তি ধ্বংসের অপ্রতিযোগী পদার্থে বর্ত্তমান গুণত্বব্যাপ্য জাতির অভাব থাকে, তাহা স্পর্শবৎ পদার্থের গুণ নহে, অতএব শব্দে যখন প্রত্যক্ষত্ব এবং স্বাশ্রয়বৃত্তি ধ্বংসের অপ্রতিযোগী পদার্থে বর্ত্তমান গুণত্বব্যাপ্য জাতির অভাব আছে, তখন উহা স্পর্শবৎ পৃথিবী প্রভৃতির গুণ নহে। স্বাশ্রয়নিষ্ঠ ধ্বংসের অপ্রতিযোগী নিত্য-গুণবৃত্তি গুণত্ব গ্রহণ করিয়া স্বরূপাসিদ্ধি হইতে পারে, এই জন্য গুণত্বাবান্তর জাতিকে প্রতিযোগিরূপে নিবেশ করা হইয়াছে। এমন কোনও শব্দ নাই, যাহা স্বাশ্রয়নিষ্ঠ ধ্বংসের প্রতিযোগী হয় না, অতএব স্বরূপাসিদ্ধির আশঙ্কা নাই।

তৃতীয় হেতুর প্রয়োগ এইরূপ যথা—শব্দ যখন স্বাশ্রয়বিষয়ক সাক্ষাৎকার বিষয়ীভূত গুণভিন্ন, তখন উহা স্পর্শবৎ পদার্থের গুণ নহে। যে বস্তুর সাক্ষাৎকার নিয়তই স্বাশ্রয়বিষয়ক হয় না, তাহা স্পর্শবৎ পদার্থের গুণ হইতে পারে না। স্পর্শবদ্‌গুণের অনুমিতি প্রভৃতি জ্ঞান স্বাশ্রয়কে বিষয় না করিয়াও হইতে পারে, এইজন্য সাক্ষাৎকার বলা হইয়াছে। সাক্ষাৎকারপদদ্বারা লৌকিক বিষয়তানিবেশই বুঝিতে হইবে, তাহা না হইলে শব্দাদির সাক্ষাৎকারে আকাশাদিরও অলৌকিক ভানে বাধা না থাকায় স্বরূপাসিদ্ধি দোষ ঘটিতে পারে। শব্দকে বীণাপ্রভৃতির গুণ স্বীকার না করিলেও বীণাদিকে অবচ্ছেদক স্বীকার করায়

'বীণায়াং ধ্বনিঃ' ইত্যাদি প্রয়োগের অনুপপত্তি হয় না। এতদ্বিষয়ে বিস্তৃত বিবরণ সূক্তিপ্রভৃতি হইতে জ্ঞাতব্য।

এখন আপত্তি হইতেছে এই যে,—শব্দ স্পর্শবৎপদার্থের গুণ হইতে না পারিলেও স্পর্শবদ্ভিন্ন আত্মার গুণ হইতে বাধা কি? তাহার উত্তরে ভাষ্যকার চারিটী হেতুদ্বারা শব্দের আত্মগুণত্বও নিষেধ করিয়াছেন উহার প্রথম হেতুর প্রয়োগ যথা—শব্দ যখন বহিরিন্দ্রিয়জন্য প্রত্যক্ষের বিষয়, তখন উহা আত্মার গুণ নহে। আত্মার গুণ কখনও বহিরিন্দ্রিয়জন্য প্রত্যক্ষের বিষয় হইতে পারে না, অতএব কিরূপে শ্রোত্রগ্রাহ্য শব্দ আত্মার গুণ হইবে।

এস্থলে আত্মগুণ শব্দে চেতনের গুণ বুঝিতে হইবে, অতএব যাহারা শব্দকে ঈশ্বরের গুণ বলিয়া স্বীকার করেন, তাহাদের মতে সিদ্ধসাধন হইবে না। আত্মগুণশব্দে যদি আত্মত্বজাতিবিশিষ্টের গুণ হইত, তবে আত্মত্বজাতির ঈশ্বরে অসত্তাহেতু উক্ত দোষ হইত। কারণ তাহারা শব্দকে আত্মার গুণত স্বীকার করেন না; পরন্তু জীবাত্মভিন্ন পরমাত্মার গুণই স্বীকার করেন, অতএব তন্মতে শব্দে আত্মগুণত্বাভাব অসিদ্ধ নহে।

দ্বিতীয় হেতু যথা—শব্দ যখন আত্মাকে বিষয় না করিয়া যে প্রত্যক্ষ উৎপন্ন হয়, তাহার বিষয়, তখন উহা আত্মার গুণ নহে। আত্মগুণ সুখপ্রভৃতির প্রত্যক্ষ 'আমি সুখী আমি দুঃখী' এইরূপে আত্মাকে বিষয় করিয়াই হইয়া থাকে।

তৃতীয় হেতু যথা—শব্দ যখন আত্মাতে সমবায় সম্বন্ধে থাকে না, তখন উহা আত্মগুণ নহে, আত্মার গুণ অবশ্যই আত্মাতে সমবায় সম্বন্ধে থাকিবে। আত্মগুণান্যত্ব সাধ্য ও আত্মসমবেতান্যত্ব প্রকৃত হেতু, অতএব সাধ্যাবিশেষ দোষ হইবে না।

চতুর্থ হেতু যথা—শব্দ যখন আত্মবিশেষ্যক স্বাশ্রয়ভেদপ্রকারক যথার্থ জ্ঞানের বিষয়, তখন উহা আত্মগুণ নহে। আত্মার গুণ সুখ প্রভৃতি ধর্ম্মে আত্মবিশেষ্যক স্বাশ্রয়ভেদপ্রকারক যথার্থজ্ঞানবিষয়ত্ব থাকিতে পারে না. প্রকৃত যথার্থজ্ঞান এইরূপ যথা,—'আত্মা শব্দাশ্রয় নহে'। শব্দ আত্মার গুণ হইলে উক্তরূপ জ্ঞান যথার্থ হয় না এবং শব্দে উক্ত বিষয়ত্বরূপ হেতু থাকিতে পারে না, অতএব উক্ত হেতুর নিশ্চয়দ্বারাই ফলত অভিপ্রায় সিদ্ধ হয়।

শব্দ দিক্ কাল ও মনের গুণও হইতে পারে না, কারণ শব্দ শ্রোত্রগ্রাহ্য এবং

বিশেষগুণ, দিক্ কাল ও মনে কোনও বিশেষগুণ নাই ও উক্ত ত্রিতয়ের গুণ শ্রোত্রগ্রাহ্য হয় না। অতএব দেখা যায় যে শব্দ গুণ বলিয়া উহা দ্রব্যাশ্রিত, অথচ উহা যখন পৃথিবী প্রভৃতি উক্ত আটটী পদার্থের গুণ হইতে পারে না, তখন উহার আশ্রয়রূপে অতিরিক্ত একটী দ্রব্যই স্বীকার করিতে হইবে, উহাই আকাশ নামে প্রসিদ্ধ।

শব্দব্যাপ্য আকাশগত একত্বসংখ্যাপ্রভৃতি আকাশের বৈধর্ম্ম্য ইহা পূর্ব্বেই বলা হইয়াছে। গগনের বিভুত্ব সূত্রকার বলিয়াছেন, অত এব উহার পরমমহৎ-পরিমাণ, শব্দের কারণরূপে সংযোগ ও বিভাগ উক্ত রূপেই আকাশের বৈধর্ম্ম্য।

আকাশ গুণবৎ বলিয়া উহা দ্রব্য, উহার সমানজাতীয় বা অসমানজাতীয় কারণ না থাকায় উহা নিত্য। ঐ আকাশ কর্ণকুহররূপ উপাধিযুক্ত হইয়া শ্রোত্ররূপে শব্দপ্রত্যক্ষের কারণ হইয়া থাকে। শব্দমূলক উপভোগ পুরুষের অদৃষ্টাপেক্ষী, অত এব দুরদৃষ্টপ্রযুক্ত যাহার ইন্দ্রিয় বিকলতা প্রাপ্ত হয়, তাহার ভোগহেতু শুভাদৃষ্টের অভাব বশতই বধিরতা হইয়া থাকে। অতএব কর্ণবিবরের তুল্যতা থাকিলেও কেহ শ্রবণশীল ও কেহ বধির এইরূপ পার্থক্যের অনুপপত্তি হয় না।

---

## প্রশস্তপাদভাষ্যম্

**কালঃ পরাপরব্যতিকরযৌগপদ্যাযৌগপদ্যচির-ক্ষিপ্রপ্রত্যয়লিঙ্গম্। তেষাং বিষয়েষু পূর্ব্বপ্রত্যয়বিল-ক্ষণানা-(১)মুৎপত্তাবন্যনিমিত্তাভাবাদ্ (২) যদত্র নিমিত্তং স কালঃ। সর্ব্বকার্য্যাণাঞ্চ উৎপত্তিস্থিতি-বিনাশহেতুস্তদ্ব্যপদেশাৎ। ক্ষণলবনিমেষকাষ্ঠাকলা-মুহূর্ত্তযামাহোরাত্রার্দ্ধমাসমাসর্ত্ত্বয়নসংবৎসরযুগকল্প-**

(১) বিলক্ষণপ্রত্যয়ানামিতি পাঠান্তরম্।

(২) নিমিত্তাসম্ভবাদিতি পাঠান্তরম্।

मन्वन्तरप्रलयमहाप्रलयव्यवहारहेतुः *। तस्य गुणाः संख्या-परिमाण-पृथक्त्व-संयोग-विभागाः। काल-लिङ्गाविशेषादेकत्वं सिद्धम्। तदनुविधानात् पृथक्-त्वम्। कारणे काल इति वचनात् परममहत्परि-माणम्। कारणपरत्वादिति (३) वचनात् संयोगः। तद्विनाशकत्वाद्विभाग इति। तस्याकाशवत् द्रव्यत्व-नित्यत्वे सिद्धे (४)। काललिङ्गाविशेषादञ्जसा एकत्वेऽपि सर्वकार्य्याणा(५)मारम्भक्रियाभिनिर्वृत्ति-स्थितिनिरोधोपाधिभेदात् मणिवत् पाचकवद्वा नानात्वोपचार इति।

[ अपरस्मिन्नपरं युगपत् चिरं चिप्रमिति काललिङ्गानि—२अ-२आ-६सू। नित्येष्वभावादनित्येषु भावात् कारणे कालाख्येति—२अ-२आ-९सू। तत्त्वं भावेन—२अ-२आ-८सू। तदनुविधानादेकपृथक्त्वञ्चेति—२अ-१आ-३१सू। कारणे कालः—७अ-१आ-२५सू। कारणपरत्वात् कारणापरत्वाच्च—७अ-२आ-२२सू। द्रव्यत्वनित्यत्वे वायुना व्याख्याते—२अ-२आ७सू। इत्येतान्या-लम्बनसूत्राणि।]

---

## जगदीशसूक्तिः

कालमाह परापरेति। परापरपदे भावप्रधाने परत्वापरत्वार्थके।

---

* सूक्तौ महाप्रलयशब्दस्य अव्याख्यानात् महाप्रलयेति पाठो न सूक्तिसम्मतः प्रतिभाति।

(३) परत्वादिवचनादिति कारणमहत्त्वादिवचनादिति च पाठान्तरे।

(४) तस्येत्यारभ्य सिद्धे इत्यन्तसन्दर्भः सर्वत्रादर्शे नास्ति।

(५) सर्वभूतकार्य्याणामिति पाठान्तरम्

ते चात्र दैशिकपरत्वापरत्वभिन्ने परत्वापरत्वे कालिके बोध्ये। ज्येष्ठः परः कनिष्ठः अपर इति प्रतीतिविषयौ हि गुणविशेषौ परत्वापरत्वे, तद्बुद्धिः कनिष्ठजन्मनोऽन्तरे यावन्तस्तपनपरिस्पन्दास्तदपेक्षया बहुतरतपनपरिस्पन्दान्तरितजन्मनि ज्येष्ठे बहुतरतपनपरिस्पन्दान्तरितजन्मत्वज्ञानेन परत्वम्, अल्पतरतपनपरिस्पन्दान्तरितजन्मत्वज्ञानेनापरत्वञ्च कनिष्ठे जन्यत इति हि गुणनिरूपणे वक्ष्यते। तथाच तादृश-परत्वापरत्वयोः व्यतिकरः मिलनं, स च यौगपद्यायौगपद्यचिरक्षिप्र-प्रत्ययाश्चेति द्वन्द्वः। ते लिङ्गानि ज्ञापकानि यस्य स काल इत्यर्थः।

ननु कथं परत्वापरत्वयोः कालज्ञापकत्वमिति चेदित्थम् उक्ततपन-परिस्पन्दास्तावत्सु (६) कालेषु प्रत्यासन्ना एव परत्वापरत्वोत्पादकाः, अन्यथा युगपदुत्पन्नयोरपि तैः परत्वापरत्वे उत्पद्येताम्। अतोत्पद्य-मानयोस्तयोरसमवायिकारणं तत्तपनपरिस्पन्दविशिष्टद्रव्यस्य ज्येष्ठ-कनिष्ठवृत्तिसंयोगो वाच्यः; तद्विशिष्टद्रव्यञ्च न कालं विना अन्यत् सम्भवति, अन्यद्रव्यस्य तपनपरिस्पन्दवैशिष्ट्याप्रतीतेः। कालस्य च तदानीमिदानीं परिस्पन्दा इति प्रतीत्या विषयीकरणात् तदानी-मित्यस्य च कालरूपत्वात्; इत्थञ्च परत्वापरत्वे काललिङ्गे इति बोध्यम्। इदमुपलक्षणम् पुष्पफलादीनां कादाचित्कत्वमपि तल्लिङ्गम्। न च पुष्पादीनां राशिविशेषस्थ-रविणैव सम्भवात् कादाचित्कत्वं न कालानु-मापकमिति वाच्यं पुष्पादिना सह रवेः सान्निध्याभावेन कालस्यैव तत्-सान्निध्यघटकत्वात्।

यौगपद्यमेककालता, अयौगपद्यमनेककालता, चिरत्वं दीर्घ-कालता, क्षिप्रत्वमल्पकालता। अत्र च कालशब्देन सूर्य्यगत्यादयः कालोपाधय उच्यन्ते। कालस्यैकत्वादेव तेषां प्रत्ययैः कालानुमानं कालस्यासिद्धत्वेन साध्यज्ञानाभावादित्यतोऽन्यथानुपपत्त्या कालकल्पक-

---

(६) स्पन्दान्तरितेषु इति पाठान्तरम्।

मेवानुमानमित्याह तेषामिति। पूर्व्वप्रत्ययतो विलक्षणानां विषयेषु घटादिषु तेषां प्रत्ययानामुत्पत्तावित्यन्वयः। पूर्वप्रत्ययो हि पूर्वसिद्ध-द्रव्यत्वादिप्रत्ययः, ततो विलक्षणानां विलक्षणयौगपद्यायौगपद्यचिर-क्षिप्रादिविषयाणामित्यर्थः। तथाहि घटा युगपदुत्पद्यन्ते युगपन्न-श्यन्तीत्यादिप्रत्ययेषु तावद् युगपत्ता पूर्वघटादिप्रत्ययतो विलक्षणो विषयः। स च प्रत्यय ऐन्द्रियको नातीन्द्रियं कालं विषयीकर्त्तुं शक्नोति, अत एकां सूर्य्यक्रियां पूर्वसिद्धत्वेनानुमितां विषयीकरोति, उत्पद्यमानघटादेश्च प्रत्यासत्त्यभावात् सूर्य्यक्रियाधिकरणत्वासम्भवात् अन्यथानुपपत्त्या तत्प्रत्यासत्तिघटकः कालः कल्प्यत इत्यर्थः।

यदत्र निमित्तमिति—यदत्र प्रत्यासत्तिघटकमित्यर्थः। तस्य समस्तकार्य्यपदार्थकारणत्वमाह सर्वकार्य्याणामिति। उत्पत्तिराद्य-क्षणसम्बन्धः, स्थितिः स्वप्रागभावध्वंसानधिकरणकालसम्बन्धः, विनाशो ध्वंसः, तद्धेतुः। अत एव सर्वोत्पत्तिमन्निमित्तकारणत्वमस्य साधर्म्य-मुक्तं प्राक्।

तद्धेतुत्वे प्रमाणमाह तद्व्यपदेशादिति। तेन कालेन उपाधी-भूतसूर्य्यक्रियाप्रत्यासत्तिघटकेन सहाधिकरणतया विशिष्य व्यपदेशा-दित्यर्थः। भवति हि इदानीमुत्पन्नः श्वः परश्वो वा उत्पत्स्यते इदानीमस्तीति व्यपदेशैरधिकरणत्वेन विशिष्य कालो व्यपदिश्यत इति। उत्पत्त्यादिव्यवहारान्तरस्यापि हेतुतामाह क्षणलवेति। स्वजन्यविभागानधिकरणं कालः क्षणः, क्षणद्वयं लवः, अक्षिपक्ष्म-संयोगनिमित्तकर्म्माधिकरणं कालो निमेषः, अष्टादशनिमेषास्तु काष्ठा, त्रिंशत्तु ताः कला, मुहूर्त्तयामादयः प्रसिद्धा एव। प्रलयः संहारकाल उक्त एव। एषां व्यवहाराणां हेतुश्च हेतुभूतज्ञानविषय इत्यर्थः।

द्रव्यत्वेन तस्य गुणानाह तस्य गुणा इति। संख्यासु मध्ये तस्य

एकत्वमेव संख्येत्याह कालिङ्गेति। काललिङ्गे परत्वापरत्वे प्रागुक्त-समस्तज्येष्ठकनिष्ठवृत्तीनां तद्वयानां स्वज्ञानेनोत्पादका अन्तरा वर्त्त-मानास्तपनपरिस्पन्दास्तत्प्रत्यासत्तिघटकस्य कालस्य अविशेषा-देकेनैव कालेन निर्वाहे अनेकत्वकल्पनायां गौरवादिति भावः। तथाच काललिङ्गीभूतपरत्वापरत्वयोः सूर्य्यप्रत्यासत्तिघटककालविशेषस्य अवि-शेष एव परम्परया काललिङ्गपरत्वापरत्वयोरविशेषो बोध्यः, तस्मा-दित्यर्थः। यद्यपि कालघटौ द्वाविति प्रतीतिविषयो द्वित्वमपि काले वर्त्तत इत्येकत्वमात्रानुपपत्तिः, तथापि स्वसजातीयद्वितीयवृत्तिसंख्या-रहितत्वे सति एकत्वं सिद्धमित्यर्थः। तदनुविधानादिति एकत्वानु-विधानादित्यर्थः। य एकः सोऽन्यस्मात् पृथगित्यनुविधानम्। कारणे काल इति कारणे कालाख्ये इति(७) हि सूत्रकारवचनं परत्वापरत्ववतोः समस्तज्येष्ठकनिष्ठयोस्तपनपरिस्पन्दप्रत्यासत्तिकारणे काले परममहत्त्वं सिध्यतीति तत्सूत्रार्थः। समस्तज्येष्ठकनिष्ठप्रत्यासत्तिकारणत्वञ्च नाविभुनः सम्भवति, विभुनः परममहत्त्वमावश्यकमिति तत्सूत्रेण प्रतिपादितमित्यर्थः।

कारणपरत्वादिति—कारणपरत्वात् कारणापरत्वाच्च परत्वापरत्वे इति सूत्रम्; कारणपरत्वादित्याद्योरर्थश्च कारणं परत्वस्य कारणमपर-त्वस्य तच्च काल इति बोध्यम्। तस्माद्धेतोः ज्येष्ठे परत्वात् कनिष्ठे चापरत्वात् परत्वापरत्वे तयोः सिद्धे इति। कालस्य हेतुत्वञ्च सूर्य्य-स्पन्दाधिकरणतया तत्प्रत्यासत्तिघटकस्यास्य संयोगद्वारेत्यतः कालस्य संयोग इत्यर्थः।

तद्विनाशकत्वादिति—परापरपुरुषक्रियया हि तादृशपुरुषकाल-विभागः, स च पूर्वसंयोगविनाशकतयैव सिद्ध इत्यतस्तद्विनाशकत्वा-दित्यर्थः। तस्य आकाशवदिति—आकाशस्य गुणवत्त्वाद् यथा द्रव्यत्वं

(७) कालाख्येति इति पाठान्तरम्।

समानासमानजातीयकारणाभावात् नित्यत्वञ्च तथा कालस्यापीत्यर्थः ।

ननु कालस्यैकत्वे नित्यत्वे च कथमतीतानागतवर्त्तमानतया स व्यवह्रियते अतीतानागतभेदेन एकत्वासम्भवात् अतीतानागतयोर्नाश-प्रागभावप्रतियोगिरूपत्वेन नित्यत्वासम्भवाच्च इत्यत आह काल-लिङ्गेति । काललिङ्गाविशेषादेकत्वं सिद्धमिति प्रागुक्तम् । तच्च व्याख्यातमेव । तस्मादञ्जसा तत्त्वेन एकत्वे सिद्धे तस्य कालस्य नाना-त्वोपचार इत्यन्वयः । उपचारे हेतुमाह सर्वकार्य्याणामिति । प्रारम्भः आद्या कृतिः, तस्याभिध्यादिह प्रागभाव एव आरम्भः, क्रिया च व्यापारः, अभिनिर्वृत्तिः फलं, स्थितिः विद्यमानता, निरोधो ध्वंसः, एतैरुपाधिभिः नानात्वोपचारः । तथाहि भविष्यति पट इत्यत्र पटस्य धर्म्मिणोऽस-त्त्वेऽपि तदीयप्रागभावसम्बन्धौपाधिकी कालस्य भविष्यत्ता । कुरुते घटमित्यत्र घटासत्त्वेऽपि तद्धेतुकुम्भकारव्यापारविद्यमानत्वौपाधिकी कालस्य वर्त्तमानता । स्मारयति पूर्व्वानुभवोऽनुभूतमर्थमित्यत्र पूर्वानु-भवासत्त्वेऽपि तत्फलस्य स्मरणस्य विद्यमानतौपाधिकी कालस्य वर्त्त-मानता । एवं चकार घटमित्यत्र घटकुम्भकारयोर्विद्यमानत्वेऽपि घटोत्पादक्रियाप्रध्वंसौपाधिकी कालस्य अतीततेत्यर्थः ।

औपाधिके व्यवहारे दृष्टान्तमाह मणिवदिति—स्फटिकादिमणिव-दित्यर्थः । स्फटिकमणेरेकत्वेऽपि यथा जवापुष्पनीलोत्पलादिसान्नि-ध्यौपाधिकरक्तनीलादित्वेन नानात्वव्यवहारस्तथेत्यर्थः । ननु जवा-रक्तिमादेः स्फटिकावृत्तित्वेन भ्रान्त्यैव व्यवहारः, काले वृत्तिना प्राग-भावादिना तूपाधिना न भ्रान्त्या व्यवहार इति दृष्टान्तदार्ष्टान्तिक-वैषम्यमित्यत आह पाचकवदिति ॥ उपलक्षणमिदम् पुरुषस्यैकत्वेऽपि तद्वृत्तिपचनपठनक्रियोपाधिको हि [यथा] पाचकपाठकतया नाना-त्वव्यवहारस्तथेत्यर्थः ।

———

## सूक्तिदीपिका

कालमाहेति उद्देशक्रमप्राप्तमिति शेषः। भावप्रधाने इति—परत्वापरत्वयोरेव काललिङ्गत्वात् धर्म्मिणोः काललिङ्गत्वाभावादिति भावः। दैशिकेत्यादि—दैशिकपरत्वापरत्वयोः दिग्लिङ्गत्वान्न ताभ्यां कालकल्पना सम्भवतीति विशेषलक्षणया तद्भिन्नपरत्वापरत्वपरिग्रहः।

वक्ष्यत इति—स्वयं भाष्यकारेणेति शेषः। तदुक्तम्—'वर्त्तमानकालयोरनियतदिग्देशसंयुक्तयोर्युवस्थविरयो रूढश्मश्रुकार्कश्यवलिपलितादिसान्निध्ये सति एकस्य द्रष्टुर्युवानमवधिं कृत्वा स्थविरे विप्रकृष्टा बुद्धिरुत्पद्यते, ततस्तामपेक्ष्य परेण कालप्रदेशेन संयोगात् परत्वस्य उत्पत्तिः। स्थविरं चावधिं कृत्वा यूनि सन्निकृष्टा बुद्धिरुत्पद्यते, ततस्तामपेक्ष्य अपरेण कालप्रदेशेन संयोगादपरत्वस्योत्पत्ति'रिति।

मिलनमिति—सामानाधिकरण्यमित्यर्थः। तच्च विषयितासंसर्गावच्छिन्नं कालिकसंसर्गावच्छिन्नं वा मन्तव्यं, समवायेन तयोर्विरुद्धत्वात्। व्यतिकरो व्यत्यय इति श्रीधराचार्य्याः, तथाहि परत्वापरत्वयोर्यो व्यतिकरो व्यत्ययः वैयधिकरण्यमिति यावत, सोऽपि काललिङ्गम् इत्यर्थः। तादृशस्वल्पाधिकतपनपरिस्पन्दाधिष्ठानकालविशेषसम्बन्धभेदेनैव तयोस्तथात्वस्य उपपादयितव्यत्वात्। प्रकारान्तरेण तदसम्भवात्।

तयोरसमवायिकारणमित्यादि—अत्र 'ज्येष्ठे परत्वप्रत्ययः कनिष्ठे अपरत्वप्रत्ययः, स च परत्वापरत्वगुणविशेषाधीनः, परत्वापरत्वे च सासमवायिकारणके भावकार्य्यत्वात्, असमवायिकारणञ्च तयोः कालपिण्डसंयोग एवेति परत्वापरत्वयोरसमवायिकारणसंयोगाश्रयतया कालसिद्धि'रिति प्राहुः।

ननु आकाशदिगात्ममनोभिः सह पिण्डसंयोगविशेषाणां तथात्वसम्भवात् किमित्यतिरिक्तकालकल्पनमिति चेन्न आकाशादिभिः पिण्डसंयोगविशेषाणां तथात्वे स्वीकर्त्तव्ये विनिगमनाविरहात् आत्ममनसामनन्तत्वाच्च कारणगौरवमित्येक एव लाघवात् कालः कल्प्यते, येन सार्द्धं पिण्डसंयोगाः परत्वापरत्वासमवायिकारणतां लभन्ते इति प्राञ्चः। उपस्कारविवृतिकारादयोऽपि पिण्डमार्त्तण्डोभयसंयुक्त-किञ्चिद्विभुद्रव्यसंयोग एव अपरत्वादिकार्य्ये असम-

वायिकारणम्। तादृशस्वभावत्वं न गगनादेरित्यादिसन्दर्भैस्तमेवार्थं प्रतिपादयन्ति।

तत्प्रत्यासत्तिघटक इत्यादि—तथाहि घटा युगपदुत्पद्यन्त इत्यादेः एकस्यां सूर्य्यक्रियायां घटा उत्पद्यन्त इत्यर्थकस्य घटादौ सूर्य्यक्रियाधिकरणकत्वप्रत्यायकस्य साक्षात्सम्बन्धेन घटसूर्य्यक्रिययोराधेयाधारभावे बाधेन स्वाश्रयकालसंयुक्ततपनाश्रितत्वादिरूपया परम्परया उपपत्तेः कर्त्तव्यतया कालसिद्धिरप्रत्यूहा।

समस्तकार्य्येत्यादि जन्यत्वावच्छिन्नं प्रति निमित्तकारणत्वं कालस्य साधर्म्यमित्यर्थः। अत्र कार्य्यतावच्छेदकसंसर्गतया कालिकस्य कारणतावच्छेदकसंसर्गतया च अभेदस्य प्रवेशः। अत एव न दिगदृष्टादावतिप्रसङ्गः।

स्वप्रागभावेत्यादि—स्वस्य यौ प्रागभावध्वंसौ तयोरनधिकरणं स्वप्रागभावानधिकरणं स्वध्वसानधिकरणञ्च इत्यर्थः। यः कालः तेन सह सम्बन्धः। एतेन उत्पत्तेः पूर्वं तत्क्षणे च स्वप्रागभावस्य स्वनाशोत्तरं स्वध्वंसस्य च सत्त्वात् न वस्तुनस्तदा तदा स्थितिव्यवहारः। तत्सत्तायाः स्थितिभिन्नत्वात्।

हेतुभूतज्ञानेति—व्यवहारं प्रति व्यवहार्य्यज्ञानस्य कारणतायाः क्लृप्तत्वेन तथाभूतक्षणादिव्यवहारे क्षणादिज्ञानस्य अवश्यं हेतुताया उपेयतया नासङ्गतिरिति भावः।

स्वसजातीयेत्यादि—न च कालवृत्तिद्रव्यत्वादिना घटादेरपि स्वसजातीयत्वेन तद्दोषतादवस्थ्यमिति वाच्यं साजात्यस्य प्रकृते द्रव्यविभाजकधर्मेण विवक्षितत्वात्। न चैवमपि कालस्य एकत्वात् द्रव्यविभाजकधर्मेण स्वसजातीयद्वितीयाप्रसिद्धा सत्यन्तदलाप्रसिद्धिरिति वाच्यम् स्वविशिष्टान्यैकत्व एव समुदितग्रन्थतात्पर्य्यात्। स्ववैशिष्ट्यञ्च स्वतादात्म्य-स्वाश्रयसजातीयद्वितीयवृत्तिसंख्यासमानाधिकरणत्वैतदुभयसम्बन्धेन। एवञ्च कालवृत्त्येकत्वस्य स्वाश्रयसजातीयद्वितीयवृत्तिसंख्यासमानाधिकरणत्वासम्भवेन स्वपदेन प्रकृते तस्योपादातुमशक्यतया घटादिवृत्त्येकत्वस्यैव तथात्वेन कालवृत्त्येकत्वे स्वविशिष्टत्वस्याक्षतत्वाददोषः। सम्बन्धघटकसाजात्यमपि पूर्व्ववत् द्रव्यविभाजकरूपेण प्रतिपत्तव्यम्, अन्यथा तद्दोषतादवस्थ्यात्। संख्यायां वृत्तित्वं समानाधिकरणत्वघटकमधिकरणत्वं वृत्तित्वञ्च समवायसम्बन्धेन विवक्षणीयम्, अन्यथा

কালিকাদিসম্বন্ধমাদায় তথৈবাপ্রসিদ্ধেঃ। বহুব্যক্তিকানামপি ঘটাদীনাং প্রত্যেকমেকত্বস্যাবাধিতত্বেন যথাশ্রুতৈকত্বসংখ্যাপরিগ্রহে অর্থান্তরমপি স্বসজাতীয়েত্যাদ্যর্থানুসরণবীজমনুসন্ধেয়ম্।

এতৈরুপাধিভিরিতি—তথাহি একস্যাপি কালস্য কিঞ্চিদ্ধর্ম্মবিশিষ্টস্য ক্ষণত্বং কিঞ্চিদ্ধর্ম্মবিশিষ্টস্য মুহূর্ত্তত্বং কিঞ্চিদ্ধর্ম্মবিশিষ্টস্য চ দিনত্বমিত্যাদিরীত্যা উপাধিভূতক্ষণাদিমাত্রবৃত্তিধর্ম্মভেদেনৈব তথা তথা ব্যবহারাঃ, ন তু কেবলস্য তথা। অত এব সিদ্ধান্তমুক্তাবল্যাং 'কালস্ত্বেকোঽপি উপাধিভেদাৎ ক্ষণাদিব্যবহারবিষয়' ইতি প্রাহ। দিনকরীয়ে তু 'তাদৃশোপাধীনামেব ক্ষণত্বাদিব্যবহারবিষয়ত্বং, ন তু মহাকালস্যেত্যপি দ্রষ্টব্য'মিত্যাহুঃ। ক্ষণত্বং স্ববৃত্তিযাবদ্ধ্বংসবত্ত্বমিতি পক্ষতাপ্রকরণে জগদীশঃ। তত্র উৎপন্নং দ্রব্যং যাবদগুণম্, উৎপন্নে চান্যতন্তুসংযোগে বা যাবন্ন পটঃ, উৎপন্নে কর্ম্মণি যাবন্ন বিভাগঃ, তাবৎকালঃ ক্ষণঃ। অথবা সামগ্রী কার্য্যরহিতা ক্ষণ ইত্যুদয়নাচার্য্যাঃ।

অয়ঞ্চ কালঃ কালিকেন সর্ব্বেষাং নিত্যদ্রব্যাতিরিক্তানাং বা অধিকরণমিতি 'কালো হি জগদাধারঃ কালাধারো ন বিদ্যতে', ইত্যাদি সঙ্গচ্ছতে। দ্বিতীয়কল্পে জগৎপদেন নিত্যদ্রব্যাতিরিক্তস্য বিশেষলক্ষণয়া পরিগ্রহাদিতি ভাবঃ।

---

## ভাষ্যতাৎপর্য্য

সম্প্রতি কালপদার্থ নিরূপণ করা হইতেছে। পৃথিবী প্রভৃতি দ্রব্যের ন্যায় কালও একটী দ্রব্য আছে। উহা কালিক পরত্ব ও অপরত্ব অর্থাৎ জ্যেষ্ঠত্ব ও কনিষ্ঠত্ব দ্বারা এবং বস্তুদ্বয়ের এককালতা ভিন্নকালতা দীর্ঘকালতা ও অল্পকালতা দ্বারা সিদ্ধ হইয়া থাকে। যে বস্তু কালানুসারে পূর্ব্বে উৎপন্ন হইয়াছে, তাহাতে পরত্ব ও যে বস্তু কালানুসারে পরে উৎপন্ন হইয়াছে, তাহাতে অপরত্ব গুণ থাকে। ক্ষণে ক্ষণে অনবরত সূর্য্যের স্পন্দন হইতেছে, যাহার জন্ম ও স্থিতিকালের মধ্যে অপর বস্তু অপেক্ষায় সূর্য্যের স্পন্দন অধিক হইয়াছে এই জ্ঞান হয়, তাহাতে আপেক্ষিক পরত্ব এবং যাহার জন্ম ও স্থিতিকালের মধ্যে উক্ত অপর বস্তু

অপেক্ষায় সূর্য্যের স্পন্দন অল্প হইয়াছে এই জ্ঞান হয়, তাহাতে আপেক্ষিক অপরত্ব উৎপন্ন হইয়া থাকে। উক্ত সূর্য্যের স্পন্দনক্রিয়া ঐ বস্তুর সহিত সাক্ষাৎ অসম্বদ্ধ বলিয়া তাহাকে সাক্ষাৎসম্বন্ধে পরত্ব ও অপরত্বের কারণ বলা যায় না, পরন্তু পরম্পরায় উক্ত পরিস্পন্দবিশিষ্ট দ্রব্যের সংযোগবিশেষকেই সাক্ষাৎ অসমবায়িকারণ বলিতে হয়। উক্ত দ্রব্য কাল ব্যতীত অপর কোনও ক্লৃপ্ত দ্রব্য হওয়া অসম্ভব, এই জন্য কালনামে একটী অতিরিক্ত দ্রব্য সিদ্ধ হইয়া থাকে। 'তখন এই বস্তু উৎপন্ন, এখন এই বস্তু উৎপন্ন' ইত্যাদিরূপে কালের প্রতীতি হয়। পুষ্প ও ফল প্রভৃতির কদাচিৎ উৎপত্তিদ্বারাও কাল সিদ্ধ হইতে পারে। কারণ পুষ্পাদির সহিত বা দেশবিশেষে অবস্থিত সূর্য্যাদির সম্বন্ধ নাই, সম্বন্ধ থাকিলে বরং উহাকেই পুষ্পফলাদির কদাচিৎ উৎপত্তির কারণ বলা যাইত। কিন্তু পুষ্পাদির সহিত সূর্য্যের সম্বন্ধ ধরিতে গেলেও কালকে গ্রহণ করিয়া পরম্পরায়ই উক্ত সম্বন্ধ ব্যবস্থাপন করিতে হইবে, অতএব কাল বলিয়া একটী অতিরিক্ত দ্রব্য স্বীকার না করিয়া গত্যন্তর নাই।

উৎপন্ন বস্তুসমূহের পরত্ব অপরত্ব যৌগপদ্য অযৌগপদ্য চিরস্থায়িত্ব অচিরস্থায়িত্ব প্রভৃতির প্রতীতিও কালব্যতিরেকে অসম্ভব। কারণ সূর্য্যক্রিয়ার আধিক্য ও ন্যূনতা প্রভৃতি দ্বারাই পরত্ব ও অপরত্বাদি নির্ব্বাচন করিতে হইবে, পরন্তু সূর্য্যক্রিয়ার সহিত ঘটাদি জন্য বস্তুর মুখ্য কোনও সম্বন্ধ না থাকায় উহা উপপাদন করা সম্ভব হয় না, কালকে দ্বার করিয়াই উক্ত সম্বন্ধ উপপাদন করা যায়, অতএব ঐ সম্বন্ধের ঘটকরূপে কাল অনুমিত হইতে পারে।

কাল সকল কার্য্যের উৎপত্তি স্থিতি ও বিনাশের কারণ, এই জন্যই সকল জন্য বস্তুর প্রতি নিমিত্তকারণত্ব কালের সাধর্ম্ম্য পূর্ব্বেই নিরুক্ত হইয়াছে। উক্ত কাল-পদার্থই ক্ষণমুহূর্ত্তাদি ব্যবহারের হেতু, অর্থাৎ কাল একমাত্র হইলেও উপাধিভেদে উহাতে ক্ষণ লব নিমেষ প্রভৃতি ব্যবহার হইয়া থাকে।

কালপদার্থে সংখ্যা, পরিমাণ, পৃথক্ত্ব, সংযোগ ও বিভাগ এই কয়টী মাত্র গুণ আছে। কালে সংখ্যার মধ্যে কেবল একত্বসংখ্যা আছে, কারণ স্থলের সন্দেহ-স্থলে লাঘবানুসারে পদার্থের সিদ্ধি হইয়া থাকে, অতএব একমাত্র কাল দ্বারাই যখন পরত্বাপরত্ব প্রভৃতির উপপত্তি হয়, তখন আর অনেক কাল স্বীকার করিয়া গৌরব স্বীকারে প্রয়োজন কি?

কালের সহিত অন্য দ্রব্যাদি আদান করিয়া দ্বিত্বের প্রতীতি হইলেও এই

একত্বপদে স্বসজাতীয়দ্বিতীয়রাহিত্য বিবক্ষিত হওয়ায় দোষ হয় না। উক্ত সাজাত্য দ্রব্যবিভাজক পৃথিবীত্বাদি ধর্ম্ম লইয়া বলা হইয়াছে, অতএব কালের দ্রব্যবিভাজক ধর্ম্মরূপে সজাতীয় দ্বিতীয় বস্তু না থাকায় দোষের সম্ভাবনা নাই। ঘটাদিপদার্থে উক্তরূপ একত্ব অসম্ভব, কারণ এক ঘটের সহিত পৃথিবীত্ব আদান করিয়া অপর ঘটের সজাতীয়তা রহিয়াছে।

পৃথকৃত্ব ধর্ম্ম একত্বের ব্যাপক বলিয়া কালে একত্বসিদ্ধি দ্বারা পৃথকৃত্বও সিদ্ধ হইবে। অতএব কালে একত্বের ন্যায় পৃথকৃত্ব ধর্ম্মও আছে বুঝিতে হইবে।

কালপদার্থে পরমমহৎ পরিমাণ আছে। কারণ সকল জ্যেষ্ঠ ও কনিষ্ঠবৃত্তি পরত্বাপরত্বের কারণ সূর্য্যক্রিয়ার সহিত সম্বন্ধঘটক বস্তু পরমমহৎ ভিন্ন হইতে পারে না। অনুপরিমাণ বা মধ্যমপরিমাণ বস্তুর সার্ব্বত্রিক সম্বন্ধের অভাববশতই উহা অসম্ভব হয়।

সূর্য্যক্রিয়ার সহিত কালদ্বারা পরম্পরায় সম্বন্ধ রাখিতে হইলে উক্ত বস্তুর সহিত কালের সংযোগ ব্যতীত উহা সম্ভব হইতে পারে না, এই জন্য কালে সংযোগগুণ আছে ইহাও বুঝিতে হইবে। পরত্ব ও অপরত্বযুক্ত পুরুষের ক্রিয়াদ্বারা উক্ত সংযোগের নাশক বিভাগ হইয়া থাকে; অতএব কালে বিভাগগুণও আছে স্বীকার করিতে হইবে।

আকাশ যেমন গুণের আশ্রয় বলিয়া দ্রব্য এবং সমানজাতীয় ও অসমানজাতীয় কোনও কারণ না থাকায় নিত্য বলিয়া সিদ্ধ হইয়াছে, সেইরূপ কালও গুণের আশ্রয় বলিয়া দ্রব্য এবং সমানাসমানজাতীয় কারণের অভাববশতঃ নিত্য বলিয়া সিদ্ধ জানিবে। কালের একত্ব ও নিত্যত্ববিষয়ে অনুপপত্তির বারণ পূর্ব্বেই করা হইয়াছে।

---

## প্রশস্তপাদভাষ্যম্

দিক্ পূর্ব্বাপরাদিপ্রত্যয়লিঙ্গা। মূর্ত্তদ্রব্যমবধিং কৃত্বা মূর্ত্তেষ্বেব দ্রব্যেষ্বেতস্মাদিদং (১) পূর্ব্বেণ দক্ষিণেন

---

(১) দ্রব্যেষু তস্মাদিদমিতি পাঠান্তরম্।

पश्चिमेनोत्तरेण पूर्वदक्षिणेन दक्षिणापरेण अपरोत्तरेण (२) उत्तरपूर्वेण चाधस्तादुपरिष्टाच्चेति दश प्रत्यया यतो भवन्ति (३) सा दिगिति ; अन्यनिमित्तासम्भवात् । तस्यास्तु गुणाः संख्या-परिमाण-पृथक्त्व-संयोग-विभागाः । कालवदेते सिद्धाः । दिग्लिङ्गाविशेषादञ्जसा एकत्वेऽपि दिशः परममहर्षिभिः श्रुतिस्मृतिलोकव्यवहारार्थं (४) मेरुं प्रदक्षिणमावर्त्तमानस्य भगवतः सवितुर्ये संयोगविशेषा(५)स्तेषां लोकपालपरिगृहीतदिग्देशानामन्वर्थाः प्राच्यादिभेदेन दशविधाः संज्ञाः कृताः, ततोऽभक्त्या दश दिशः सिद्धाः । तासामेव देवतापरिग्रहात् (६) पुनर्दश संज्ञा भवन्ति माहेन्द्री वैश्वानरी याम्या (७) नैर्ऋती वारुणी वायव्या कौबेरी (८) ऐशानी ब्राह्मी नागी चेति ।

[ इत इदमिति यतस्तद्दिश्यं लिङ्गम्—२अ-२आ-१०सू । तत्त्वम्भावेन—२अ-२आ-१२सू । तदनुविधानादेकपृथक्त्वञ्चेति—२अ-१आ-३१सू । गुणैर्दिग्व्या-

---

(२) दक्षिणपश्चिमेन पश्चिमदक्षिणेन इति पाठान्तरम् ।

(३) प्रत्ययापन्ना भवति इति पाठान्तरम् ।

(४) सव्यवहारार्थमिति पाठान्तरम् ।

(५) संयोगास्तेषामिति संयोगविभागा इति च पाठान्तरम् ।

(६) परिग्रहवशादिति परिगृहीतत्वादिति च पाठान्तरम् ।

(७) यामी इति पाठान्तरम् ।

(८) वायवी चान्द्रमसी इति पाठान्तरम् ।

ख्याता—७अ-१आ-२४सू। कारणपरत्वात् कारणापरत्वाच्च—७अ-२आ-२२सू। कार्य्यविशेषेण नानात्वम्—२अ-२आ १३सू। आदित्यसंयोगाद् भूतपूर्व्वाद् भविष्यतो भूताच्च प्राची—२अ-२आ-१४सू। तथा दक्षिणा प्रतीची उदीची च—२अ-२आ-१५सू। एतेन दिगन्तराणि व्याख्यातानि—२अ-२आ-१६सू। इत्येतान्यालम्बनसूत्राणि ]

---

## जगदीशसूक्तिः

दिशमाह दिगिति। लिङ्गं प्रमाणं पूर्वापरादिप्रत्यय एव तादृश-प्रमाणमित्यर्थः। एतादृशप्रत्ययस्य जनकत्वेन दिक् सिध्यतीत्यर्थः। तदेव विशदयति मूर्त्तद्रव्यमिति। अमूर्त्तद्रव्यस्य पूर्वादिप्रत्ययावधित्वं पूर्वादिप्रत्ययविषयत्वञ्च न दृष्टमित्यत उभयत्र मूर्त्तत्वम्। काले पूर्वापरव्यवहारस्त्वतीतत्वाद्यौपाधिक एवेति बोध्यम्। पूर्वेणेत्यादिकं स्वार्थिकैणप्रत्ययान्तं पाणिनिमते, स्वमते तु स्वार्थिकतृतीयान्तम्। इदं पूर्वमित्यादिरर्थः। अन्यनिमित्तासम्भवादिति—पूर्वस्यां दिशो-त्येवमेव हि व्यवहारो, न च दिशोऽन्यत्तन्निमित्तं भवितुमर्हति। कालो यदि तन्निमित्तं तदा पूर्वकाल इत्यादिरेव व्यवहारः। पूर्व-दिग्वर्त्तिनि वर्त्तमानवस्तुन्यपि सत्त्वात्।

द्रव्यत्वेन तत्र संख्यादिगुणपञ्चकमाह तस्यास्त्विति। काल-वदेत इति—यथा काललिङ्गकालिकपरत्वापरत्वाविशेषात् कालस्य एकत्वं, तथा दिग्लिङ्गदैशिकपरत्वापरत्वाविशेषात् दिशोऽप्येकत्व-मित्यर्थः। तथाहि एकदेशमधिकृत्य कश्चित् पूर्वः कश्चिदपर इति प्रतीत्या पूर्वापरयोः वस्तुनोः परत्वापरत्वे विषयोक्रियेते। अन्तरा बहु-तरसंयुक्तसंयोगाल्पतरसंयुक्तसंयोगज्ञानञ्च तयोरुत्पादकम्। तयो-रसमवायिकारणानि च ते संयोगाः परापरवस्तुनोः प्रत्यासत्त्यभावादनु-पपन्ना अतः प्रत्यासत्तिघटिका दिक् कल्प्यते। तस्याश्च समस्तपरा-

परप्रत्यासत्तिघटकत्वमविशिष्टमित्येकत्वमेव दिश इत्यर्थः। दिग्लिङ्गकत्वप्रमानदिशोऽविशेषेण दिग्लिङ्गस्याविशेष । यथा काले एकत्वानुविधानात् पृथक्त्वं तथा दिश्यपि। पूर्वदर्शितसूत्रात् [ यथा ] काले परममहत्त्वं तथा दिश्यपि। यथा पूर्वदर्शितापरसूत्रात् काले संयोगस्तथा दिश्यपि। यथा काले तद्विनाशकत्वात् विभागस्तथा-दिश्यपीत्यर्थः।

ननु यदि दिगेकैव तदा कथं प्राच्यादयो दश दिश इति व्यवहार इत्यत आह दिगलिङ्गाविशेषादिति। दिग्लिङ्गाविशेषो व्याख्यात एव. तस्मादञ्जसा तत्त्वेन दिश एकत्वे सिद्धेऽपि परममहर्षिभिः मरीच्याद्यैः प्राच्यादिभेदेन दशविधा दिशः संज्ञाः कृता इत्यर्थः। किमर्थमित्यत आह श्रुतिस्मृतिलोकव्यवहारार्थमिति। 'प्राचोप्लवने(१) देशे यजेते'ति 'न प्रतीचीशिराः शयीते'ति श्रौतो व्यवहारः 'आयुष्यं प्राङ्मुखो भुङ्क्ते' इति स्मार्त्तः। 'दक्षिणेन याही'त्यादिः लौकिको व्यवहारः, तदर्थमित्यर्थः।

ताः संज्ञाः किं पारिभाषिक्यः किं वा नेत्यत आह अन्वर्था इति। अन्येषामनुगतस्वार्था अन्येषां सम्बन्धस्वार्था इत्यर्थः। स्वार्थो हि दिशोऽन्येषां सम्बन्ध इत्यन्वर्थाः प्राच्यादिसंज्ञा इत्यथः। केषां सम्बन्धस्वार्था इत्यत्राह भगवतः सवितुरिति लोकपालपरिगृहीतेति च। मेरुं पर्वतं प्रदक्षिणं यथा स्यात् तथा आवर्त्तमानस्य वेष्टयतो भगवतः सवितुर्ये संयोगविशेषाः पूर्वाचलोपरिभागावच्छिन्ना आकाशसंयोग-विशेषाः तेषामिन्द्रादि(२)लोकपालपरिगृहीतदिग्देशानाञ्च सम्बन्ध-स्वार्थाः(३) संज्ञा इत्यर्थः। दिग्देशानामित्यत्र चार्थः पूरणीयः। तथाच एकस्या एव दिशः तादृशरविसंयोगतादृशदिग्देशौपाधिक्यः दश संज्ञा

(१) प्रवण इति क्वचित् पाठः।

(१) तेषामिन्द्रियादि इति क्वचित् पाठः।

(२) सम्बन्धः स्वार्थाः इति क्वचित् पाठः।

इत्यर्थः। प्राच्यादिभेदेनेति—प्राच्यवाचीप्रतीच्यादिभेदेन भिन्नाः संज्ञा इत्यर्थः। प्रथममत्र अञ्चति सूर्य्य इति प्राची। अवाक् तदनन्तरमत्र अञ्चति सूर्य्य इत्यवाची। प्रतीपमत्र अञ्चतीति प्रतीचीत्यादि यथा-कथञ्चिदन्यानुगतस्वार्थता बोध्या नक्षत्रमण्डलापेक्षया यतः पृथिवी सा दिगधः। पृथिव्यपेक्षया नक्षत्रमण्डलं यतः सा दिग् ऊर्द्ध्वा इति बोध्यम्। अवान्तरोर्द्ध्वाधोव्यवहारश्च वह्निज्वाला यत्र याति तदूर्द्ध्वं, गुरुद्रव्यं यत्र पतति तदध इत्येवं रीत्या।

ननु सूर्य्यसंयोगवशात् लोकपालपरिगृहीतदिग्देशवशाच्च दिशां भेदेन संज्ञादशकं प्रसक्तमत आह ततोऽभक्त्येति। अभक्त्या अभेदेन तद्देशदिशां भेदापरिग्रहेण दशविधाः संज्ञा इत्यर्थः। तासामेवेति उपाधिभेदेन भिन्नत्वेन व्यवह्रियमाणानां तासां दिशामेवेत्यर्थः।

---

## सूक्तिदीपिका

कालाकाशयोरिव दिशोऽपि एकमात्रव्यक्तित्वात् कालत्वाकाशत्ववत् दिक्त्वमुपाधिरेव, न तु सामान्यमिति निरुक्तमेवाधस्तात्। तेनैव दिक्त्वा-भिसम्बन्धाद्दिगित्यस्य सूचितप्रायत्वेन न पुनस्तदभिधानम्। दिशो लक्षणन्तु दिग्विशेषणतासम्बन्धावच्छिन्नकार्य्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारण-त्वम्। तथाहि सिद्धान्ते दैशिकविशेषणतासम्बन्धेन जन्यत्वावच्छिन्नं प्रति तादात्म्येन दिशः कारणतया प्रकृतलक्षणं दिशि नानुपपन्नं भवति कालिकविशेषणतासम्बन्धावच्छिन्नकार्य्यतानिरूपिततादृशकारणत्वस्य काले सत्त्वात्तत्रातिप्रसङ्गः स्यादिति दिग्विशेषणतायाः कार्य्यतावच्छेदकसंसर्ग-तया निवेश इति वदन्ति।

जनकत्वेनेति—तथाहि तादृशप्रत्ययरूपकार्य्येण कारणस्य अनुमानात् दिक्सिद्धिरिति भावः। यद्यपि दिक्कृताभ्यां परत्वापरत्वाभ्यामपि दिक्-सिद्धिः सम्भवति, तथापि तदपेक्षया पूर्व्वादिप्रत्ययस्य लिङ्गत्वाभिधानं गुण-प्रकरणे तयोस्तल्लिङ्गत्वस्य वक्ष्यमाणताभिप्रायेणेति विवृतमाचार्य्यैः।

जनकत्वञ्च पूर्व्वापरादिप्रत्यये प्रयोजकत्वरूपं ग्राह्यम्; तथा च पूर्व्वापरादिप्रत्यये पूर्व्वत्वापरत्वादिकं जनकं, तत्र च तत्तद्दिक्संयोगस्तत्र च दिगिति परम्परया दिशो हेतुत्वम्; विशेषतः पूर्व्वापरादिप्रत्यये साक्षाद्दिशोऽकारणत्वादिति ध्येयम्। अत एव 'परत्वापरत्वबुद्धिं प्रति परत्वापरत्वे तत्र दिक्पिण्डसंयोगस्तत्र दिगिति क्रमेण परम्परया दिशस्तद्बुद्धौ निमित्तत्वं बोध्य'मिति मुक्तावलीदिनकरीये।

परत्वापरत्वे पक्षीकृत्य भावकार्य्यत्वं हेतूकृत्य असमवायिकारणवत्त्वसिद्ध्या कालस्थलोक्तरीत्या संयोगस्य असमवायिकारणत्वे सिद्धे तादृशसंयोगाश्रयतया कालसिद्धिमभिप्रयन्ति। नहि तादृशसंयोगाश्रयो दिगन्यः सम्भवति आकाशादीनां विनिगमनाविरहेण गौरवप्रसङ्गात् मूर्त्तानाम् अव्यापकतया तथात्वासम्भवात्।

अमूर्त्तद्रव्यस्य सर्वगततया पूर्वादिप्रत्ययावधित्वं पूर्वादिप्रत्ययविषयत्वं वा नोपपद्यते तयोरमूर्त्तद्रव्यत्वेन विरोधादत एव मूर्त्तद्रव्यमवधिं कृत्वेत्यादि। अवधित्वं स्वरूपसम्बन्धविशेष एव।

तस्याश्च समस्तेत्यादि—न च परापरत्वाभिमतव्यक्तिभेदेन दिशो भेदसत्त्वेऽपि प्रत्यासत्तेः शक्योपपादनत्वेन कथमित एव दिश एकत्वमिति वाच्यं दिशोऽनेकत्वेन तदुपपत्तावपि गौरवस्य अपह्नोतुमशक्यतया प्रत्यासत्तिघटिकाया एकस्या एव दिशः सिद्धेः।

प्रथममतेत्यादि—अन्ये पुनरन्यथैव संज्ञाभेदबीजमुन्नयन्ति, यथा—यत्पुरुषस्य उदयगिरिसन्निहिता या दिक्, सा तत्पुरुषस्य प्राची; एवमुदयगिरिव्यवहिता या दिक्, सा प्रतीची; यत्पुरुषस्य सुमेरुसन्निहिता या दिक्, सा उदीची; तद्व्यवहिता त्ववाची। एकस्या एव दिशः पुरुषभेदेन विपरीतदिक्संज्ञाभागित्वेन पुरुषविशेषनियन्त्रणम्। निष्कर्षे तु यन्मूर्त्तादुदयगिरिसन्निहितं यन्मूर्त्तं सा ततः प्राचीत्यादि। तदपेक्षया उदयगिरिसन्निहितत्वञ्च तन्निष्ठोदयगिरिसंयुक्तसंयोगापेक्षया अल्पतरोदयगिरिसंयुक्तसंयोगवत्त्वम् इत्यादिरूपेण अर्थो बोध्यः। एवञ्च मथुरायाः प्राच्यः प्रयाग इत्यादौ मथुरानिष्ठोदयगिरिसंयोगपर्य्याप्तसंख्याव्याप्यसंख्यापर्य्याप्त्यधिकरणोदयगिरिसंयुक्तसंयोगवन्मूर्त्तवृत्तिः प्रयाग इत्यन्वयधीः प्रतिपत्तव्या। तादृशसंख्या-

व्याप्यत्वञ्च नाडृश्यसंख्यासमानाधिकरणप्रतियोग्यवृत्तिभेदप्रतियोगितावच्छेद-कत्वं, न तु व्यापकसामानाधिकरण्यादिरूपं, तदुपगमे स्वस्मिन्नपि स्वनिरूपितनाडृश्यव्याप्यत्वानपायात् मथुरादावपि मथुराद्यवधिकप्राच्यत्वा-दिव्यवहारप्रसङ्गात्। एतद्विस्तरस्तु ग्रन्थान्तरे द्रष्टव्यः। सप्तपदार्थीकारास्तु रौद्रीं नाम एकादशीं दिशमप्याविदयन्ति। तदुक्तं सप्तपदार्थ्यां 'दिगैन्द्री आग्नेयी याम्या नैर्ऋती वारुणी वायवी कौवेरी ऐशानी नागी ब्राह्मी रौद्री चेत्येकादशविधा' इति। 'रौद्री अन्तरिक्षप्रदेश' इति माधवसरस्वतीकृत-सप्तपदार्थीमित-भाषिण्याम्। 'रौद्री दशानामपि दिशां मध्यभाग' इति जिनवर्द्धनसूरिकृत-सप्तपदार्थीटीकायामुक्तमुपलभ्यते। सर्वाभिरेताभिर्दिक्संज्ञाभिः तत्तद्दिगो-ऽधिदेवताः स्पष्टाः।

दीधितिकृत्प्रभृतयस्तु दिक्कालयोरीश्वररूपतामङ्गीकुर्वते। नव्यास्तु दिक्का-लयोरीश्वरस्वरूपत्वं तत्तज्जीवरूपत्वं वेत्यत्र विनिगमकाभावात् ताविमावति-रिच्येते इति प्राहुः।

---

## ভাষ্যতাৎপর্য্য

আকাশ এবং কালের স্থায় দিক্ও একটী দ্রব্য। উহাতে যে দিকত্ব ধর্ম্ম আছে উহা জাতি নহে, উপাধিমাত্র, ইহা পূর্ব্বেই বলা হইয়াছে। কাল যেরূপ কালিক-বিশেষণতাসম্বন্ধে সকল জন্যবস্তুরই উৎপত্তির কারণ, সেইরূপ দিক্ দৈশিক-বিশেষণতাসম্বন্ধে সকল জন্যবস্তুর উৎপত্তির কারণ। উক্ত কার্য্যকারণভাব দ্বারাই দিক্পদার্থের লক্ষণও নির্ব্বচন করা যাইতে পারে। পূর্ব্ব পশ্চিম প্রভৃতি প্রতীতি দ্বারা উক্ত দিক্পদার্থের সিদ্ধি করিতে হইবে। দৈশিক পরত্ব ও অপরত্বদ্বারাও দিক্পদার্থের সিদ্ধি হইয়া থাকে। যথা দূরবর্ত্তী বস্তুতে পরত্ব ও অদূরবর্ত্তী বস্তুতে যে অপরত্বের জ্ঞান হয়, ঐ পরত্ব ও অপরত্ব বিশেষ কারণ অপেক্ষা করিয়া থাকে। বিশেষ কারণ ব্যতীত উহার উৎপত্তি হইলে অবিশেষরূপে সকল বস্তুতেই তুল্যভাবে পরত্ব ও অপরত্বের সম্ভব হইত। মূর্ত্তপদার্থবিশেষরূপ উপাধিবিশিষ্ট দিক্ ও পরাপর পদার্থের সংযোগগত অল্পতা ও ভূয়স্ত্বকেই যথাক্রমে অপরত্ব ও পরত্বের কারণ

বলিতে হইবে। উক্ত সংযোগের আশ্রয়রূপে দিক্‌ও পরম্পরায় সিদ্ধ হয়। অন্য কোনও দ্রব্য উক্ত সংযোগাদির আশ্রয় বলা যায় না, কারণ মূর্ত্তদ্রব্য সকল মূর্ত্ত বস্তুর সহিত সংযুক্ত হইতে পারে না বলিয়া সকল মূর্ত্তদ্রব্যের পরত্বাপরত্বের কারণ সংযোগের আশ্রয় তাহাকে কিরূপে বলা যাইতে পারে। আত্মাপ্রভৃতি বিভু পদার্থের একটীকে কারণ বলিতে গেলে অপরটীকেই বা বলিতে বাধা কি? অতএব বিনিগমনার অভাববশতঃ সকলকেই কারণ বলিতে হইলে মহাগৌরব হইয়া ওঠে, অতএব একমাত্র বিভুদিক্ স্বীকার করিয়া গৌরবাদি দোষ নিরাস করিতে হইবে।

কালপদার্থের ন্যায় দিক্‌পদার্থেও সংখ্যাপ্রভৃতি পাঁচটী গুণ আছে। সংখ্যা একত্ব, পরিমাণ পরমমহত্ত্ব, পৃথক্‌ত্ব, সংযোগ ও বিভাগ এই পাঁচটীই দিক্‌পদার্থের গুণ।

উহার বিশেষ কারণ জগদীশসূক্তিতে বিশেষরূপে বিবৃত হইয়াছে। এখন আপত্তি হইতেছে এই যে, যদি দিক্ কেবল একটীই থাকে, তবে পূর্ব্ব পশ্চিম প্রভৃতি রূপে বিভিন্নব্যবহার কিরূপে উপপন্ন হইতে পারে। তাহার উত্তর এই যে দিক্ কেবল এক হইলেও উপাধিভেদে উহার নানাত্ব ব্যবহার হইয়া থাকে। একটী একটী বিশেষ মূর্ত্তবস্তুকে উপাধিরূপে আদান করিয়া বিভু একমাত্র দিক্‌পদার্থেরও ঘটাকাশ পটাকাশাদির ন্যায় পূর্ব্ব পশ্চিমাদিরূপে বিভিন্ন ব্যবহার সুসঙ্গত হইতে পারে।

দিক্‌পদার্থের বিভিন্নরূপে অন্যপদার্থের যোগবশতঃ দশপ্রকার সংজ্ঞা হইতে পারে যথা—প্রথম যে দিকে সূর্য্য উদিত হন্, সেই দিক্ প্রাচী, তদনন্তর সূর্য্য যে দিকে গমন করেন সেই দিক্ অবাচী, বিপরীত যে দিকে সূর্য্য গমন করেন, সেই দিক্ প্রতীচী ইত্যাদিরূপে সূর্য্যের সম্পর্ক লইয়া দিকের সংজ্ঞা পরিবর্ত্তিত হয়।

কেহ কেহ বলেন যে, যে বস্তু হইতে যে বস্তু উদয়গিরির নিকটবর্ত্তী, তাহাই তাহার পূর্ব্বদিক্, এবং যে বস্তু হইতে যে বস্তু উদয়গিরির বিপ্রকৃষ্ট, তাহাই তাহার পশ্চিম দিক্ ইত্যাদি। ইহারা সকলেই মূর্ত্ত কোনও উপাধিবিশেষকেই দিক্‌শব্দে ধরিয়া লইয়া থাকেন, কাজেই পূর্ব্ব পশ্চিম ইত্যাদি ব্যবহারে দিকের একত্ব বিঘটিত হয় না।

দীধিতিকার প্রভৃতি দিক্ ও কাল বলিয়া অতিরিক্ত পদার্থ স্বীকার না

করিয়া উহা ঈশ্বরস্বরূপ কল্পনা করিয়া লইয়াছেন। কিন্তু নব্যসম্প্রদায় বলেন যে, দিক্ ও কালকে ঈশ্বরস্বরূপ কল্পনা করিব, অথবা জীবস্বরূপ কল্পনা করিব, তাহার কোনও বিনিগমনা না থাকায় প্রত্যেকস্বরূপই কল্পনা করা যাইতে পারে, তাহাতে মহাগৌরব হয়, অতএব উহা অতিরিক্ত স্বীকার করিয়া গৌরব নিরাস করাই শ্রেয়। বিস্তৃত গ্রন্থান্তরে জ্ঞাতব্য।

---

## प्रशस्तपादभाष्यम्

**आत्मत्वाभिसम्बन्धादात्मा। तस्य सौक्ष्म्यादप्रत्यक्षत्वेऽपि (१) करणैः शब्दाद्युपलब्ध्यनुमितैः श्रोत्रादिभिः समधिगमः क्रियते। वास्यादीनामिव(२) करणानां कर्त्तृप्रयोज्यत्वदर्शनात्(३) शब्दादिषु प्रसिद्ध्या च प्रसाधकोऽनुमीयते। न शरीरेन्द्रियमनसा(४)मज्ञत्वात्, न शरीरस्य चैतन्यं घटादिवद्भूतकार्य्यत्वात् मृते चासम्भवात्। नेन्द्रियाणां करणत्वात् उपहतेषु विषयासान्निध्ये चानुस्मृतिदर्शनात्। नाऽपि मनसः करणान्तरानपेक्षित्वे युगपदालोचनस्मृतिप्रसङ्गात् स्वयं करणभावाच्च परिशेषादात्मकार्य्यत्वात् (५) तेनात्मा**

---

(१) सौक्ष्म्यादप्रत्यक्षत्वे सति इति पाठान्तरम्।

(२) इवेति क्वचन पुस्तके नास्ति।

(३) क्वचित् पुस्तके कर्त्तृपदं नास्ति।

(४) मनसां चैतन्येति पाठान्तरम्।

(५) कार्य्यं ज्ञानमिति पाठान्तरम्। अन्यत्र कार्य्यत्वादित्यधिकम्।

समधिगम्यते। शरीरसमवायिनीभ्याञ्च हिताहित-प्राप्तिपरीहारयोग्याभ्यां प्रवृत्तिनिवृत्तिभ्यां (६) रथ-कर्म्मणा सारथिवत् प्रयत्नवान् विग्रहस्याधिष्ठातानु-मीयते। प्राणादिभिश्चेति।

कथं? शरीरपरिगृहीते(७) वायौ विकृतकर्म्मदर्शनात् भस्त्राध्मापयितेव निमेषोन्मेषकर्म्मणा नियतेन दारु-यन्त्रप्रयोक्तेव देहस्य वृद्धिक्षतभग्नसंरोहणादिनिमित्त-त्वात् गृहपतिरिव अभिमतविषयग्राहककरणसम्बन्ध-निमित्तेन मनःकर्म्मणा गृहकोणेषु पेलकप्रेरक इव दारकः नयनविषयालोचनानन्तरं रसानुस्मृतिक्रमेण रसनविक्रियादर्शनात् अनेकगवाक्षान्तर्गतप्रेक्षक-वदुभयदर्शी कश्चिदेको विज्ञायते।

सुखदुःखेच्छाद्वेषप्रयत्नैश्च गुणैर्गुण्यनुमीयते। ते च न शरीरेन्द्रियगुणाः, कस्मात्? अहङ्कारेणैक-वाक्यताभावात् प्रदेशवृत्तित्वात् अयावद्द्रव्यभावि-त्वात् वाह्येन्द्रियाप्रत्यक्षत्वाच्च(८) तथा अहं-शब्देनापि पृथिव्यादिशब्दव्यतिरेकादिति।

तस्य गुणा बुद्धि-सुख-दुःखे-च्छा-द्वेष-प्रयत्न-धर्म्मा-धर्म्म-

(६) प्रवृत्तिनिवृत्तिभ्यामित्यंशः क्वचिन्न वर्त्तते।

(७) विग्रहीते इति पाठान्तरम्।

(८) वाह्येन्द्रियाग्राह्यत्वाच्च इति पाठान्तरम्।

विशेषादेकत्वं सिद्धं वैधर्म्यत्वेन। तथा च शब्दव्याप्यसंख्यावत्त्वमेव वैधर्म्यं, तच्च न पृथिव्यादाविति भावः। यद्यपि शब्दलिङ्गत्वादित्येव वक्तुमुचितं, तथापि पृथक्त्वसंख्यायामपि कुत्रचित् शब्दव्याप्यत्वमित्यर्थ-लाभार्थं शब्दलिङ्गत्वाविशेषादित्युक्तम्। अत एव शब्दानुविधाय्येव पृथक्त्वं वैधर्म्यमाह तदनुविधानादिति। तस्य शब्दस्य अनुविधानात् व्याप्यत्वात् पृथक्त्वं वैधर्म्यत्वेन सिद्धमित्यर्थः।

ननु परिमाणं द्रव्यमात्रे अतिप्रसक्तमतः शब्दसमवायिनिष्ठपरि-माणमेव आकाशस्य वैधर्म्यं वाच्यं, तच्चाप्रसिद्धं गगनस्य परिमाणवत्त्वे प्रमाणाभावादत आह(२) विभव(३)वचनादिति—महानाकाशस्तथा चात्मेति(४) सूत्रेण गगनस्य विभुत्ववचनादित्यर्थः, परममहत्त्वं परि-माणं सिद्धमिति पूर्वेणान्वयः।

संयोगविभागयोरपि द्रव्यमात्रे अतिप्रसक्तत्वादाह शब्देति। संयोगविभागपदाभ्यां शब्दासमवायिकारणयोः संयोगविभागयोरभि-धानात् संयोगविभागौ वैधर्म्यं, शब्दासमवायिकारणस्य मूर्त्तेन सह संयोगस्य विभागस्य गगनादन्यत्र असत्त्वादिति भावः।

यद्यपि प्रागुक्तधर्मिग्राहकमानेनास्य द्रव्यत्वं सिद्धं, तथापि संयोगादि-मत्त्वादपि तत् साधयितुं शक्यत इति तदप्याह अत इति—संयोगादि-मत्त्वादित्यर्थः। अत्र हेत्वन्तरमाह गुणवत्त्वादिति—अग्रिम-चकारयोजनया गुणवत्त्वाच्चेत्यर्थः। द्रव्यं द्रव्यत्ववत्। नित्यत्वे प्रमाण-माह अनाश्रितत्वादिति—असमवेतभावत्वादित्यर्थः। नित्यमित्यग्रे-तनेनान्वयः। अनाश्रितत्वादित्यस्य विभुत्वादित्यर्थः। तथा च द्रव्य-त्वस्यैव साधकोऽयं हेतुरिति यथाश्रुतमेव न्याय्यमिति वदन्ति।

तस्य नित्यत्वं साधयति समानेति। कारणमत्र समवायिकारणं,

---

(२) प्रमाणाभावादाहेति पाठान्तरम्। (३) विभु इति पाठान्तरम्।

(४) तथा चात्मा चेति इति पाठान्तरम्।

तच्च आकाशस्य सजातीयं विजातीयञ्च नास्ति। नहि आकाश-सजातीयमाकाशान्तरमस्ति, नापि तद्विजातीयं पृथिव्यादिकं तत्-समवायिकारणं घटादिकारणकस्य रूपादेरिव गुणत्वस्य कर्म्मत्वस्य वा प्रसङ्गात्। पृथिव्यादेस्तु सजातीयपृथिव्यादिरिव गुणकर्म्मणोस्तु विजातीयं द्रव्यमेव समवायिकारणम्।

तस्य इन्द्रियप्रकृतित्वं दर्शयति सर्वप्राणिनामिति। ननु विभुन-स्तस्य सर्वप्राणिनां शब्दोपलब्धिनिमित्तत्वे सर्वेषामेव सर्वशब्दोपलब्धि-प्रसङ्ग इत्यत आह श्रोत्रभावेनेति। ननु तथापि स दोषः, तस्य विभुनः श्रोत्रभावादित्यत आह श्रोत्रं पुनरिति। ननु श्रवणविवरसत्त्वे कथं कश्चिद् वधिर इत्यत आह शब्दनिमित्तेति। उपभोग्यवीणादिशब्दा विषयतया निमित्तानि यस्य तादृशो य उपभोगस्तत्प्रापकाभ्यां धर्म्माधर्म्माभ्याम् उपनिबद्ध इत्यर्थः। तथा च तादृशधर्म्माधर्म्मरहितस्य तादृशविवरसत्त्वेऽपि वाधिर्य्यमित्याह तस्य चेति।

---

## सूक्तिदीपिका

अथ किमाकाशादिसंज्ञाया नैमित्तिकत्वं वा पारिभाषिकत्वं वा औपाधि-कत्वं वेति विचारयितुं पूर्वपक्षमुपन्यस्यन् पारिभाषिकतया उपसंहरति गर्गरी-त्यादिना।—गर्गरी घटश्चेत्यनर्थान्तरम्। तथाहि यः खलु गर्गर्य्यादिभेदेन आकाशादिभेदः समुपलभ्यते, स उपाधिकृत एव, न तु वास्तवः, अत आकाशत्वादौ नित्यानेकसमवेतत्वरूपजातिलक्षणसमन्वयाभावात् तदवच्छिन्न-सङ्केतवती आकाशादिसंज्ञा न नैमित्तिकी, परमाकाशत्वादेरुभयावृत्तिधर्म्मतया तदवच्छिन्नसङ्केतवत्त्वात् पारिभाषिक्येव। तदुक्तं स्वयमेव जगदीशेन शब्द-शक्तिप्रकाशिकायां 'जात्यवच्छिन्नसङ्केतवती नैमित्तिकी मते'ति। 'उभया-वृत्तिधर्म्मेण संज्ञा स्यात् पारिभाषिकी' इति च। औपाधिकत्वमपि आका-शत्वादेरेकमात्रवृत्तिधर्म्मतयैव शक्यं निरसितुम्। अत एव शब्दशक्तिप्रकाशि-कायां 'शब्दादिकन्तु सखण्डत्वेन उपाधिरपि नानुगतो द्वितयावृत्तित्वादतः

ज्ञानं क्वचिदाश्रितं कार्य्यत्वात् गन्धवदिति। आश्रितत्वञ्च समवायेन बोध्यम्। तेन न शरीरेण सिद्धसाधनम्।

ननु शरीरे वहिरिन्द्रिये मनसि वा समवेतं ज्ञानमस्तु इत्यत आह न शरीरेन्द्रियेति। एषां नाधिगम इत्यनुषङ्गः। अत्र हेतुमाह अज्ञत्वादिति। तेषां ज्ञानानाश्रयत्वादित्यर्थः। एषां प्रत्येकं चैतन्याभावं ग्राहयति न शरीरस्य चैतन्यमिति। चैतन्यं ज्ञानं तन्न शरीरस्य। तत्र हेतुमाह घटादिवदिति। भूतत्वात् कार्य्यत्वाच्च हेतुद्वयम्। घटादिवदिति दृष्टार्थः।

ननु अप्रयोजकमिदं भूतस्य कार्य्यस्य वा चैतन्याश्रयत्वे को विरोध इत्यत आह मृते चेति। यदि शरीराश्रितं चैतन्यं स्यात्, मृते शरीरेऽपि स्यात्तत्र तदसम्भवात् न शरीराश्रितं चैतन्यमित्यर्थः। वहिरिन्द्रियाणां चैतन्याभावं ग्राहयति नेन्द्रियाणामिति। न वहिरिन्द्रियाणामित्यर्थः। हेतुमाह करणत्वादिति। जलानयनकरणघटादिरत्र दृष्टार्थः। अत्राप्यप्रयोजकत्वमाशङ्क्यान्यदाह उपहतेष्विति। अर्थस्मृतिर्हि(१) ज्ञानविशेषः, सा यदि श्रोत्रादीन्द्रियसमवेता स्यात्, तदा वाधिर्य्यादिहेतुरोगविशेषादिना उपहतेष्विन्द्रियेषु सत्सु स्मृतिर्न स्यादाश्रयस्योपहतत्वात्, उपहतेष्वपि दृश्यमाना तु स्मृतिः आश्रयान्तरमधिगमयतीत्यर्थः।

स्मृतेरिन्द्रियानाश्रयत्वे हेत्वन्तरमप्याह विषयासान्निध्यादिति। इन्द्रियेण स्वेन जन्यैव स्मृतिरिन्द्रियसमवेता वाच्या, अन्यथा अतिप्रसङ्गात्, तथाच इन्द्रियस्य प्रतिरोधकात् विषयविनाशात् विषयस्य इन्द्रियासान्निध्यात् इन्द्रियेण तदजननेऽपि दृश्यमाना स्मृतिराश्रयान्तरमधिगमयतीत्यर्थः। न च स्वजन्यानुभवजन्यसंस्कारसत्त्वात् तत्-

---

(१) अनुस्मृतिर्हि इति पाठान्तरम् स्यात्।

स्मृतिरिति वाच्यं संस्कारस्येन्द्रियावृत्तित्वात्, अन्यथा इन्द्रियस्य उपघाते नाशे वा स्मृतिर्न स्यात्।

नन्वेवं भूतत्वेन कार्य्यत्वेन वा चैतन्यस्य शरीरावृत्तित्वे उपघाते विषयासान्निध्ये च स्मृतिदर्शनात् वहिरिन्द्रियावृत्तित्वे चाभूते अजन्ये अनुपहते केनाप्यप्रतिरुद्धे विषयसन्निकर्षे च मनोरूपेन्द्रिये चैतन्यमास्तामित्यत आह नापि मनस इति। अयमभिप्रायः—ज्ञानाश्रयत्वेनानुमीयमानं मनो ज्ञानकर्त्तैव (२) स्यात् न ज्ञानकरणं (३) तथा च चक्षुरादीन्द्रियाणां युगपत् स्वस्वसन्निकर्षे मनसस्तदिन्द्रियसन्निकर्षापेक्षां विना युगपदनेकस्य आलोचनस्य जननप्रसङ्गादित्यर्थः। करणस्येव कर्त्तुरेकव्यापारमात्रजननियमाभावात्।

अथ यदिन्द्रियसंयुक्तं मनस्तन्द्रियविषयविषयकमेव ज्ञानं मनसा स्वस्मिन् जन्यत इति चेत्तथापि ज्ञानाश्रयतयैव सिद्धं मनो न करणतयेत्यतस्तदेवात्मेति पर्य्यवसितं, मन इति तस्य संज्ञामात्रभेदः स्यात्। तथाच आत्मा तावतैव सिद्ध एव स्यात्, परन्तु युगपदनेकव्यापारापत्तिवारणार्थम् एकमात्रव्यापारजननहेतु करण(४)मनुमातुमवशिष्यते। तच्च मनोग्रन्थे वक्ष्यत इति भावः।

ननु करणतयैव मनोऽनुमाय तत्रैव ज्ञानाश्रयत्वानुमाप्यत इत्यत आह स्वयं करणभावाच्चेति। स्वस्मिन्नित्यर्थे स्वयमिति। करणतया अनुमाने स्वस्मिन् मनसि ज्ञानकरणभावात् ज्ञानकरणत्वात् न ज्ञानाश्रयत्वमित्यर्थः। ज्ञानाश्रयासिद्धौ निराश्रयस्य ज्ञानस्यैव असिद्धौ तत्करणानुमानं न सम्भवति। ज्ञानाश्रयानुमाने च ज्ञानकरणभिन्न एवासौ सिद्ध इति मनसः करणतामात्रं, ततो न ज्ञानाश्रयत्वमित्यर्थः। आत्मकार्य्यत्वादिति चैतन्यस्येति शेषः।

---

(२) ज्ञानकर्त्तैव इति पाठान्तरम स्याव्।

(३) कारणमिति पाठान्तरम्।

(४) हेतुं करणमिति पाठः क्वचित्।

ननु शब्दादीनां ज्ञानेन तदाश्रय आत्मा अनुमीयत इत्युक्तं आत्म-पदार्थसाधने च न स्वात्ममात्रसाधनमुद्देश्यम्, किन्तु सकलात्मसाधनमेव; तथा च परज्ञानस्याप्रत्यक्षत्वेन अनुमात्रा अज्ञातत्वात् कथं तज्ज्ञानेन तदनुमानमित्यत: सकलात्मसाधकप्रत्यक्षहेतुना तत् साधयति शरीर-समवायिनीभ्यामिति। प्रयत्नवान् विग्रहस्य शरीरस्य अधिष्ठाता संयोगी, अर्थात् स्वपरसाधारण आत्मा अनुमीयत इत्यर्थ:। केन हेतुना अनुमीयत इत्यत्राह प्रवृत्तिनिवृत्तिभ्यामिति। प्रवृत्तिनिवृत्ती यत्न-विशेषौ तत्पदद्वयस्य तज्जन्यक्रियापरत्वेन प्रवृत्तिनिवृत्तिजन्यक्रियाभ्या-मित्यर्थ:। क्रियामात्रस्य वाय्वादौ व्यभिचारात् प्रवृत्तिनिवृत्तिजन्य-क्रिये एव प्रत्येकं हेतू। तयो: क्रिययो: प्रवृत्तिनिवृत्तिजन्यतां ग्राह-यति हिताहितेति। तयो: प्राप्तिपरीहारौ यथासंख्यं बोध्यौ। तद्-योग्याभ्यामित्यर्थ:। वाय्वादिक्रिया तु न वाय्वादेर्हिताहितप्राप्तिपरी-हारयोग्या। शरीरं प्रयत्नवत्संयुक्तं हिताहितप्राप्तिपरीहारयोग्यक्रिया-वत्त्वादित्यनुमाने हेतो: पक्षवृत्तित्वं साधयति शरीरेति। शरीरं सम-वायि ययोस्ताहृशीभ्यामित्यर्थ:। अत्र दृष्टान्तमाह रथकर्म्मणेति। प्रयत्नवत: सारथे: रथाधिष्ठानं यथा रथकर्म्मणा अनुमीयत इत्यर्थ:। हेत्वन्तरमाह प्राणादिभिश्चेति। आदिना शरीराभ्यन्तरीणापानादि-समस्तवायुपरिग्रह:।

ननु प्राणादे: प्रयत्नवदनधिष्ठितशरीरेऽपि सम्भवोऽस्तु कथं तेषु व्याप्तिरिति पृच्छति कथमित्यनेन। उत्तरयति शरीरपरिग्रहीत इति। वायोर्हि स्वाभाविकी तिर्य्यग्गति:, तस्य ऊर्द्धाधोगतिरूपं कर्म्म तु विकृतं, तद्दर्शनात् शरीराधिष्ठाता प्रयत्नवाननुमीयत इत्यर्थ:। अत्र दृष्टान्त: भस्त्रेति। भस्त्रा कर्म्मकारस्य वायुप्रेरकचर्म्मपुटकम्; तदा-ध्मापयिता तदीयवायुक्रियाजनक: कर्म्मकार इवेत्यर्थ:। प्रयोगस्त्वेवं जीवच्छरीरं प्रयत्नवदधिष्ठितं सम्मूर्च्छनरहितविकृतक्रियवाय्वाश्रयत्वात्

भस्त्रावदिति। हेत्वन्तरमाह निमेषोन्मेषेति। नियतेन वाय्वाद्याघात-जन्यभिन्नतया नियतेन स्वाभाविकेन निमेषोन्मेषरूपचक्षुःपक्ष्मकर्म्मणा विग्रहस्य अधिष्ठाता प्रयत्नवाननुमीयत इत्यर्थः। दारुयन्त्रनिमेषोन्मेष-कर्म्मणा दारुयन्त्रप्रयोक्ता शिल्पीव। प्रयोगस्त्वेवं—जीवच्छरीरं प्रयत्न-वदधिष्ठितं वाय्वाद्यभिघातजन्यभिन्ननिमेषोन्मेषवत्त्वात् तादृशनिमेषो-न्मेषविशिष्टदारुयन्त्रवदिति।

हेत्वन्तरमाह देहस्येति। देहस्य वृद्धिः पुष्टिः, क्षतभग्नयोः संरोहणं पूर्वावस्थावत्करणम्, आदिना चेष्टापरिग्रहः। तन्निमित्तत्वादित्यर्थः। प्रयत्नवान् देहस्याधिष्ठाता अनुमीयत इत्यनुषङ्गः। अत्र दृष्टान्तो गृह-पतिरिवेति। गृहस्य वृद्धिक्षतभग्नसंरोहणैर्यथा तत्कारको गृहपति-रित्यर्थः। आदिपदग्राह्येण हेतुना अनुमाने तु न गृहपतिर्दृष्टान्तः गृहस्य चेष्टाभावात् प्रयत्नाधीनशरीरक्रियाया एव चेष्टात्वात्। प्रयोगस्त्वेवं—जीवच्छरीरं प्रयत्नवदधिष्ठितं वृद्ध्यादिमत्त्वात् वृद्ध्यादि-मद्गृहादिवदिति। हेत्वन्तरमाह अभिमतेति। बहुषु वस्तुषु पुरः-स्थितेष्वपि यत्र वस्तुनि दिदृक्षा सोऽभिमतो विषयः, तद्ग्राहकं करणं चक्षुः, तत्सम्बन्धनिमित्तेन मनःकर्म्मणा विग्रहस्याधिष्ठाता प्रयत्नवाननु-मीयत इत्यर्थः। विषयेन्द्रियसंयोगहेतोर्मनःकर्म्मणः प्रयत्नवन्तं विना अन्याप्रयोज्यत्वात्, अन्यथा सुषुप्तस्यापि मनसा तादृशसंयोगजननापत्तेः। गृहकोण इत्यादिरत्र दृष्टान्तः। पेलकं खेलाविशेषं कुर्व्वतां शिशूनां जतुगुटिका। गृहकोणेषु व्यवस्थिते गुटिकान्तरे वस्त्वन्तरे वा पेलक-प्रेरको दारकः शिशुरिवेत्यर्थः। अभिमतविषयगुटिकासंयोगहेतु-गुटिकाकर्म्मणापि तत्प्रेरकः शिशुरनुमीयते। प्रयोगस्त्वेवं—मनः प्रयत्नवदधिष्ठितम् अभिमतविषयसंयोगहेतुगतिमत्त्वात् यथोक्तदारक-प्रेरितपेलकवदिति। अभिमतसंयोगस्तु चक्षुपस्तद्धेतुक्रियमनसः, पेलके त्वभिमतः संयोगः स्वस्यैवेति विशेषो बोध्यः।

रसनेन्द्रियविकारेणापि तदनुमानमाह नयनविषयेति। नयनविषयस्तिन्तिडाद्यम्लद्रव्यं तस्यालोचनं चक्षुषा ग्रहणं तदनन्तरं रसानुस्मृतिः, तदीयाम्लरसस्मरणम्, तत्क्रमेणेति। तत्क्रमेण रसनेन्द्रियस्य विक्रियाया रसनायाः स्पृणिकाविर्भावणरूपस्य विकारस्य दर्शनात् उभयदर्शी अम्लद्रव्य-तद्रसद्वयदर्शी तदुभयज्ञाता आत्मा अनुमीयत इति परत्रान्वयः। क्रमेणेत्यत्र क्रमस्य अम्लरसस्मरणानन्तरं तद्ग्राहकस्यातीन्द्रियस्यानुमानम्, ततस्तदिन्द्रियस्य विकारदर्शनादित्यर्थः। रसनेन्द्रियविकारस्य अम्लद्रव्यरस-तदुभयज्ञानं विना अनुपपत्तेः, तदुभयज्ञानञ्च तदुभयज्ञातारं तच्छरीराधिष्ठातारं विनानुपपत्तेरिति क्रमेण शरीराधिष्ठाता तदुभयदर्शी अनुमीयत इत्यर्थः। अत्रोभयदर्शित्वमात्रे दृष्टान्तमाह अनेकगवाक्षेति। गवाक्षो गृहच्छेदेन जालमार्गः अनेकतदन्तरैः अनेकतच्छिद्रैः प्रेक्षकपुरुषवदित्यर्थः, तस्याप्युभयदर्शित्वात्।

सुखादिगुणैरपि तदनुमानमाह सुखदुःखेत्यादि। सुखादिकं द्रव्यसमवेतं गुणत्वादित्यनुमानेन सुखादिगुणैर्गुणी अनुमीयत इत्यर्थः। ननु शरीरसमवेतत्वेन इन्द्रियसमवेतत्वेन वा अर्थान्तरं स्यादित्यत आह ते च गुणा इति। कस्मादिति—शरीरगुणत्वाभावः कस्मादिति पृच्छति, अहङ्कारेणेति तदुत्तरम्, अहमिति बुद्धिविशेषेणेत्यर्थः। तदेकवाक्यताभावादित्यर्थः(१),—अत्र अभावपदं विरोधिपरम्(२), एकवाक्यतापदञ्च सामानाधिकरण्यानुभवपरं, तथाच अहङ्कारेण सामानाधिकरण्यानुभवविरोधादित्यर्थः। तथाहि योऽहं जन्मान्तरे कृतपुण्यकर्म्मा सोऽहमिदानीं सुखी, योऽहं कृतपापकर्म्मा सोऽहमिदानीं दुःखी, योऽहं पुण्यकर्म्म करोमि सोऽहं जन्मान्तरे सुखमिच्छामि, दुःखञ्च द्वेष्मि,

(१) भावादित्यर्थ इत्यत्र भावादिति इत्यर्थं पाठः स्यात्।

(२) विरोधिपरमित्यत्र विरोधपरमिति पाठः स्यात्।

योऽहं जन्मान्तरे सुखमिच्छामि सोऽहं धर्म्मार्थं यज (३) इत्येवमहन्त्वेन येषां सुखादीनां सामानाधिकरण्यमनुभूयते,तेषां सुखादीनां शरीरवृत्तित्वविरोधादित्यर्थः। न हि अहन्त्वसामानाधिकरण्येनानुभूयमानयोर्जन्मद्वयीयपुण्यसुखाद्योः शरीरवृत्तित्वं सम्भवति, जन्मद्वये शरीरभेदात् जन्मद्वयवर्त्यभिन्नपदार्थेनैवोपपत्तेः, स एव आत्मा सुखाद्याश्रयः।

ननु योऽहं गौर आसं सोऽहमिदानीं दुःखात् कृशः, योऽहं कृश आसं सोऽहमिदानीं स्थूल इत्यत्राहंपदार्थसमानाधिकरणगौरत्वकृशत्वादीनां बुद्धिः शरीराभेदमवगाहत इति नात्माभेदं गौरत्वादेरात्मन्यभावादिति चेन्न, तत्र शरीरे अहंपदार्थाभेदबुद्धेर्भ्रमत्वात् पूर्वोपदर्शितप्रतीत्या बाधितत्वेन प्रमात्वबाधात् अवस्थाभेदेन शरीरभेदात् शरीराभेदबुद्धेरपि तत्र भ्रमत्वात्। न चैवं चैत्रगृहे जातस्य शिशोरवस्थाभेदेन शरीरभेदे चैत्रपुत्रत्वव्याघात इति वाच्यं चैत्रपुत्रशरीरारम्भकारब्धशरीरान्तरस्यापि चैत्रपुत्रत्वस्वीकारात्। एवमिन्द्रियगुणत्वाभावोऽपि बोध्यः इन्द्रियाणामपि जन्मद्वये भेदात्।

सुखादीनां शरीरेन्द्रियगुणत्वाभावे हेत्वन्तरमप्याह प्रदेशेति। एकदेशमात्रवृत्तिगुणत्वादित्यर्थः। इदञ्च शरीरेन्द्रियसंयोगविभागयोर्व्यभिचारि, अतो न शरीरेन्द्रियगुणा इत्यस्य न स्पर्शवद्विशेषगुणा इत्यर्थः। तेनोक्तसंयोगे श्रोत्रेन्द्रियनिष्ठशब्दे च न व्यभिचारः।

हेत्वन्तरमाह अयावद्द्रव्येति। सुखादयो न शरीरस्य इन्द्रियस्य वा गुणाः अयावद्द्रव्यभावित्वात्, स्वाश्रयद्रव्ये सत्यपि तत्र स्वसमानजातीययावतामभावादित्यर्थः। सुखादीनामाश्रयो हि कदाचित् सुखादिजातीययावतामभाववान्, शरीरमिन्द्रियं वा न कदाचित् स्वगुणरूपादिजातीयानां यावतामभाववदित्यर्थः। अत्र चोत्पत्तिक्षणं विनेति बोध्यं, तत्क्षणे शरीरेन्द्रिययोरप्यगुणत्वात्। हेत्वन्तरमाह वाह्येन्द्रि-

(३) कर्म्मार्थं यजत इति प्रथमादर्शपाठः।

थेति। बाह्येन्द्रियप्रत्यक्षवृत्तिगुणत्वव्याप्यजातिराहित्यादित्यर्थः ; तेनेन्द्रियगुणस्य बाह्येन्द्रियाप्रत्यक्षत्वेऽपि न तत्र व्यभिचारः यथोक्तराहित्याभावात्। सुखादिकन्तु तद्रहितमेवात्मसाधकम्।

प्रत्यक्षमाह अहंशब्देनेति। अत्र विषयीकृतत्वादिति पूरणीयम्। अहंशब्दपदञ्च अहमित्येवप्रत्यक्षपरम् (४) तथाचाहमितिप्रत्यक्षविषयत्वादित्यर्थः। ईदृशप्रत्यय[क्ष]स्य न शरीरं विषयः, अहं शरीरीति भेदेन प्रतीतेरिति भावः। ननु अहमिति प्रत्ययः पृथिव्यादिकमेव विषयीकरोत्वित्यत्राह पृथिव्यादिशब्देति, अहं पृथिवीतिशब्दप्रयोगाभावादित्यर्थः।

आत्मनो गुणानाह तस्य गुणा इति। एषु गुणेषु सूत्रकारसम्मतिमाह आत्मलिङ्गेति। आत्मनो लिङ्गानि साधकानि तेषामधिकारे कथने बुद्ध्यादयः सिद्धा इत्यर्थः। बुद्ध्यादीनां तद्गुणत्वाभावे तल्लिङ्गवचनानुपपत्तेरिति भावः।

धर्म्माधर्म्मसिद्धौ तत्सम्मतिमाह धर्म्माधर्म्माविति। विहितनिषिद्धकर्म्मभ्यां धर्म्माधर्म्मौ जन्येते, कालान्तरभाविनोः सुखदुःखयोः विहितनिषिद्धकर्म्मभ्यां साक्षाज्जनयितुमसामर्थ्येन तद्व्यापारौ स्थिरौ धर्म्माधर्म्मौ कल्प्येते। तत्र व्यधिकरणावपि धर्म्माधर्म्मौ भिन्नात्मनि सुखदुःखे जनयेतामित्यत्र सूत्रकारेणोक्तम्—आत्मान्तरगुणानामात्मान्तर-*गुणेष्वकारणत्वादिति,—व्यधिकरणधर्म्माधर्म्मात्मकगुणानां व्यधिकरणसुखदुःखात्मकगुणाजनकत्वादिति तदर्थः। ततो धर्म्माधर्म्मौ सिद्धावित्यर्थः। धर्म्माधर्म्माभावे ईदृशाकाङ्क्षासमाधानयोरसम्भवादिति भावः।

संस्कारसिद्धौ सूत्रकारसम्मतिमाह संस्कारः स्मृत्युत्पत्ताविति।

---

(४) अहमित्येवप्रत्यक्षेति पाठः स्यात्।

* आत्मान्तरगुणानामात्मान्तरेऽकारणत्वादिति उपस्कारादिसम्मतः पाठः, तत्र तथैव व्याख्यानात्।

'आत्ममनसोः संयोगात् संस्काराच्च स्मृति'रिति सूत्रं, स्मृत्युत्पत्तौ संस्कारस्य हेतुत्वकथनात् संस्कारस्तद्वचनात् सिद्ध इत्यर्थः। संख्यायां सूत्रकारसम्मतिमाह व्यवस्थावचनात् संख्येति। 'नानात्मानो व्यवस्थात' इति सूत्रम्, अहमयमित्यादिव्यवस्थावशादात्मानो नानेति तदर्थः *। नानात्वञ्च बहुत्वसंख्येत्यतस्तद्वचनात् संख्या सिद्धेत्यर्थः। तद्वचनादेव पृथक्त्वसिद्धिं रत्याह अत एवेति। अत एव बहुत्वसंख्यायाः पृथक्त्वाभावे असम्भवादित्यर्थः।

आत्मनि परममहत्त्वपरिमाणे सूत्रकारसम्मतिमाह तथा चात्मेति। विभवान्महानाकाशस्तथा चात्मे'ति तत्सूत्रम्। तथाचेति आकाशतुल्य एवेत्यर्थः। तत्राकाशतुल्यत्वेनात्मकथनात् परममहत्त्वमित्यर्थः। ननु आत्मनो विभुत्वं कुत इति चेन्न अविभुत्वे शरीरावच्छिन्नं वाच्यं, अवच्छिन्नद्रव्यत्वे च मूर्त्तत्वं वाच्यं, तच्च मूर्त्तं यदि नित्यं तदा परमाणुत्वप्रसङ्गः नित्यमूर्त्तस्य परमाणुत्वनियमात्। तदस्त्वसौ परमाणुरिति चेन्न (१) प्रत्यक्षज्ञानादिगुणाश्रयत्वबाधात्। अथास्त्वसाववयवीति चेन्न अवयविनोऽनित्यत्वनियमेन उत्पत्तिविनाशप्रसङ्गात्। तथा च तस्मिन् नष्टे शुभाशुभकर्म्मफलभोक्ता कश्चिन्न स्यादित्यर्थः। तत्र संयोगविभागौ साधयति सन्निकर्षजत्वात् सुखादीनामिति। सन्निकर्षः संयोगः सुखादीनां तज्जन्यत्वादित्यर्थः। स च संयोगः शरीरात्मनोः, तदनपेक्षत्वे शरीरानवच्छिन्नात्मभागेऽपि सुखाद्युत्पत्तिप्रसङ्गादित्यर्थः। एवमात्ममनःसंयोगश्च, तदनपेक्षत्वे सर्व्वदा सुखाद्युत्पत्तिप्रसङ्गात्।

तद्विनाशकत्वादिति—तादृशसंयोगस्य तावन्न सार्व्वदिकत्वं (२)

---

* सर्व्वत्रैव वैशेषिकसूत्रादर्शेषु 'व्यवस्थातो नाना' इति तत्सूत्रं समुपलभ्यते। परन्तु जगदीशसूक्त्यादर्शपाठाद्यनुसारेणायं पाठो गृहीतः। तत्रापि व्यवस्थात इत्यत्र प्रथमादर्शे 'व्यवस्थेति' इति पाठोऽस्ति।

(१) चेन्न इत्यत्र चेदित्येतन्मात्रं प्रथमादर्शे। (२) अत्र सार्व्वत्रिकत्वमिति पाठः क्वचित्।

तथात्वे नित्यतापत्तेः सदैव सुखाद्युत्पत्तिप्रसङ्गाच्च। ततस्तस्य विनाशो वाच्यः, विभागेनैव नाश इत्यतस्तद्विनाशकत्वाद्विभागसिद्धिरित्यर्थः।

---

## सूक्तिदीपिका

लक्षणस्य उद्देशक्रमानुसारितया यथोद्देशं दिक्पदार्थनिरूपणानन्तरम् आत्मनो लक्षणमाह मूले आत्मत्वेत्यादिना। आत्मानमाहेति सूक्तौ उद्देश-क्रमानुसारेणेति शेषः। आत्मत्वाभिसम्बन्धादात्मा इतरेभ्यो भिद्यत इति साध्यबोधकपदसम्बन्धेन सम्पूर्णवाक्यमवसेयम्। आत्मत्वाभिसम्बन्धमन्त-र्भाव्य आत्मा पक्षीकर्त्तव्य इति वार्थः।

ननु सुखादिसमवायिकारणतावच्छेदकतया सिद्धाया आत्मत्वजातेः सुखादिविरहिणि परमात्मनि अभावात् तत्रैव भागासिद्धो हेतुः, प्रकृतात्म-पदेन परमात्मनोऽलाभेन तस्य दशमद्रव्यत्वापत्तिश्चेत्यत आह समवायेनेत्यादि। तथाहि ज्ञानाधिकरणतया ईश्वरेऽप्यनपायात् आत्मत्वस्य ईश्वरवृत्तित्वं नानुप-पन्नमिति भावः। अन्नंभट्टादिभिः 'ज्ञानाधिकरणमात्मा' इत्यादिलक्षणेनैव ईश्वरसाधारणस्य आत्मलक्षणस्य तत एव कृतमुपन्यासमुपलभामहे।

कालिकादिसम्बन्धेन कालादेर्ज्ञानाश्रयतायामविवादात् आत्मत्वस्य ईश्वर-वत् तत्रापि सत्त्वप्रसङ्गेन व्यभिचारशङ्कया समवायेनेति सम्बन्धविशेषोपक्षेपः।

एतेन परमेशप्रतिपादकाः कर्मधारयसमासनिष्पन्नपरमात्मपदप्रयोगादयो-ऽपि सम्यगुपपद्यन्ते। अन्यथा परमश्चासावात्मा चेति विग्रहवाक्यादौ परमे-श्वरमुद्दिश्य आत्मपदप्रयोगादिरसङ्गतः स्यादिति भावः।

अन्यात्मनीति—अयोगिन आत्मनीत्यर्थः। मनसेति—योगजधर्मानुगृही-तेन मनसेत्यर्थः। योगिव्यक्तेरपि यावन्न योगजधर्मसमवधानं तावत् तदीय-मनसापि तत्प्रत्यक्षासम्भवादिति भावः। ननु अयोगिव्यक्तेरपि अहं जाना-मीत्यादिप्रत्यक्षेण धर्मितावच्छेदकतया आत्मत्वस्य अवगाहनात् कथमन्यात्मनि तत्प्रत्यक्षापलाप इति चेत् न मोक्षजनकतत्त्वज्ञानस्य सर्वदार्शनिकोपादेयतया

तस्यैव परमप्रयोजनकत्वेन प्रकृतेऽपि योगजधर्म्मानुगृहीतमनोजनितस्वात्मत्वावच्छिन्नविषयकप्रत्यक्षस्य उपग्रहात्। अथवा अन्यात्मनि इत्यस्य स्वभिन्नात्मनीत्यर्थः। योगिव्यक्तेरित्यस्य च उपलक्षणतया अयोगिव्यक्तेरपीत्यर्थः। तथाहि स्वभिन्नात्मनि आत्मत्वस्य अप्रत्यक्षत्वेऽपि स्वात्मनि योगिनो वा अयोगिनो वा आत्मत्वस्य प्रत्यक्षं भवत्येव इति भावः।

ननु आत्मनः परममहत्त्वात् अणुत्वलक्षणं सूक्ष्मत्वं तत्र बाधितमेव योगिप्रत्यक्षे परमाण्वादौ व्यभिचारश्च इत्यतः सौक्ष्म्यादित्यस्य वहिरिन्द्रियेत्याद्यर्थविवरणम्। तस्य च वहिरिन्द्रियजन्यलौकिकप्रत्यक्षायोग्यत्वमर्थः।

ननु स्वयमेव आत्मनो मानसप्रत्यक्षविषयत्वमङ्गीकृत्य तस्य पुनरप्रत्यक्षत्ववचनमुन्मत्तप्रलपितं स्यादित्यतः अप्रत्यक्षत्वे सतीत्यस्य वहिरिन्द्रियाप्रत्यक्षत्वे सतीत्यर्थकथनम्। एतेन वहिरिन्द्रियेण आत्मनोऽनुपलब्धेरात्मा असिद्ध इति लोकायतिकादिमतं निरस्तं, वहिरिन्द्रियप्रत्यक्षमात्रस्य वस्तुसाधकताया अपसिद्धान्तत्वात्।

कर्त्तृव्यापार्य्याणीति—कर्त्तृप्रयोज्यव्यापारवन्ति इत्यर्थः। तथाहि कर्त्तृत्वेन तत्र आत्मा सिद्ध इति भावः। न्यायकन्दल्यादौ 'यत्करणं तत् केनचित् कर्त्रा प्रयुज्यते कार्य्ये व्यापार्य्यते, यथा वास्यादिकं वर्द्धकिना'। इत्यादिदर्शनात् कर्त्तृव्यापार्य्याणीत्यस्य कर्त्तृप्रयोज्यानीति वार्थः।

षष्ठ्यर्थ इत्यादि—षष्ठीसप्तम्यारर्थं प्रति भेदो नास्तीति प्राचां प्रवादात् सप्तम्या विषयत्वार्थकत्वस्य भूयो दृष्टचरत्वाच्च तदुक्तिश्चिन्त्या।

सविषयकार्थबोधकधातुयोगे कर्त्तृत्वस्य आश्रयत्वलक्षणतया ज्ञातेत्यस्य ज्ञानाश्रय इत्यर्थः। प्रसाधक इति पदस्य कर्त्तरि वुण्प्रत्ययनिष्पन्नत्वेन ज्ञानकर्त्तृत्वरूपार्थलाभः।

तेनेत्यादि—शरीरस्य अवच्छेदकतासम्बन्धेन ज्ञानाश्रयस्य समवायेन ज्ञानाश्रयत्वविरहात् ततो ज्ञानाश्रयीभूतदेहातिरिक्तात्मनोऽसिद्धा नार्थान्तरमिति भावः।

न शरीरेन्द्रियेत्यादि—ननु चैतन्याभावलक्षणस्य अज्ञत्वस्य शरीरेन्द्रियमनःसु चैतन्याभावसाधकतयोपन्यासे सन्दिग्धासिद्धो हेतुः सिद्धसाधनं वा इत्यतः समाधत्ते एषामित्यादिना। तथाहि प्रकृतग्रन्थो न शरीरेन्द्रियमनःसु

चैतन्याभावसाधनपरः, किन्तु श्रोत्रादिभिः करणैर्ज्ञातृत्वेन तदनुमानप्रतिषेधपर इति भावः।

ननु तत्रापि तद्दोषतादवस्थ्यम् अज्ञत्वस्य तेषु संशयास्पदत्वात सन्दिग्धस्य हेतोः साधकत्वासम्भवादित्यतः तदपि साधनान्तरेण अनुमितमित्याह एषां प्रत्येकस्येत्यादिना।

चैतन्यं ज्ञानमित्यादि—तथाचायं प्रयोगः—शरीरं चैतन्याभाववत् भूतत्वात् कार्य्यत्वाच्च घटादिवत्। द्वन्द्वात् परः श्रूयमाणः प्रत्येकमभिसम्बध्यते इति नयेन भूतकार्य्यत्वादित्यतो भूतत्वात् कार्य्यत्वाच्च इति हेतुद्वयलाभो नानुपपन्नः। भूतकार्य्यत्वमित्यखण्डैकहेतुत्वपक्षस्तु भूतेत्यंशस्य वैयर्थ्यशङ्कया प्रत्युक्तः; तदुक्तमाचार्य्यैः 'भूतकार्य्यत्वादिति भूतत्वात् कार्य्यत्वाच्चेत्यर्थः। अन्यथा असमर्थविशेषणो हेतुः स्या'दिति। कन्दलीकारादयस्तु भूतकार्य्यत्वादिति विशिष्टमेव हेतुमुपाददते।

अत्रेदमवधेयम्—कार्य्यस्य देहादेः चैतन्याश्रयत्वे कार्य्यभावमात्रस्य प्रध्वंसप्रतियोगितया स्वाश्रयनाशोत्तरं ज्ञानोपार्जितसंस्कारादेरन्यजन्मनि सुतरामसम्भवेन जातमात्रस्य स्तन्यपानादिप्रवृत्तिर्नोपपद्यते, अनायत्या च अदृष्टादेरपि तत्रैवोपेयतया कृतहानाकृताभ्यागमादिदोषोऽपि दुष्परिहरतामापद्यत इति।

मनसः स्वतन्त्रतया चैतन्याभावसाधनस्य अनुपदमेव क्रियमाणत्वात् इन्द्रियपदेन वहिरिन्द्रियमात्रं परिगृहीतम्।

आश्रयस्योपहतत्वादिति—तथाहि स्मृतिं प्रति अनुभवस्य कारणतायाः क्लृप्तत्वेन कार्य्यकारणयोरैकाधिकरण्यनियमात् अनुभवितृत्वेन अभिमते इन्द्रिये स्मरणेन भाव्यं, तच्चोपहतपूर्वमिति तत्र स्मृतिरेवानुपपन्ना स्यादिति, अतः स्थिरः कश्चिदाश्रयः कल्पनीयः, यस्मिन्नाश्रये अनुभवितरि इन्द्रियोपघाते सत्यपि स्मृतिः सुसङ्गच्छेत, स एवायमात्मेति भावः। उक्तमाचार्य्यैः 'स्मृतिसंस्कारानुभवाः समानाश्रया इति नियमः। तथा च इन्द्रियेषु चैतन्याश्रयेषु स्वीक्रियमाणेषु तेषामुपघाते अन्धादिभिः पूर्वमनुभूतानां रूपादीनामस्मरणप्रसङ्गा'दिति। किञ्च इन्द्रियाणां चैतन्यस्वीकारे सर्व्वेषामेव तेषां तुल्यतया चैतन्यवत्त्वस्याभ्युपगन्तव्यतया पृथगिन्द्रियेषु विरुद्धेच्छासम्भवात् प्रवृत्त्याद्यनुपपत्तिदोषादयोऽपि ऊहाह्यार्य्याः।

अभृत इत्यादि—मनसः प्रकृते अभृतत्वादिविशेषणेन प्रागुक्तहेतुभिः तत्र चैतन्याभावसाधनमशक्यं स्वरूपासिद्धेरिति प्रतिपादितं भवति।

मनसः करणतामात्रमित्यादि—ननु मनसो ज्ञानानाश्रयत्वे 'कामः सङ्कल्पो विचिकित्सा' इत्यादिश्रुत्या इच्छाज्ञानादिरूपाणां कामसङ्कल्पविचिकित्सादीनां मनोगुणत्वप्रतिपादनविरोध इति चेन्न आयुर्घृतमित्यादाविव मनसः कामादिजनकताया एव तादृशश्रुत्यर्थत्वादिति, न तु तत्तदाधारत्वादेः। कामादेः मनोगुणत्वमभ्युपगच्छतामपि कामादौ मनोऽभेदरूपयथाश्रुतश्रुत्यर्थस्य स्वीकर्त्तुमशक्यतया लक्षणाया आश्रयणीयत्वादिति।

सकलात्मसाधकेत्यादि—सकलात्मसाधकः यः प्रत्यक्षः हेतुः तेन। परकीयात्मवृत्तिप्रवृत्तिनिवृत्त्यायत्नविशेषयोरपि परेणाग्रहात् ताभ्यां परकीयात्मसाधनस्य अशक्यत्वात् तद्दाषतादवस्थ्यमिति लक्षणाया प्रवृत्तिनिवृत्तिजन्यक्रिया प्रकृतलिङ्गम्। प्रत्येकमिति—प्रवृत्तिजन्यक्रिया निवृत्तिजन्यक्रिया च पृथक्तया हेतू, न प्रवृत्तिनिवृत्त्युभयजन्या एका क्रिया, तस्या असम्भवात् विशिष्टहेतोर्वैयर्थ्याच्च।

शरीरं प्रयत्नेत्यादि—अत्र साध्यघटकप्रयत्नवत्तया आत्मसिद्धिः। क्रियावत्त्वमात्रस्य प्राप्तिपरीहारयोग्यक्रियावत्त्वमात्रस्य वा वाय्वादौ व्यभिचारात् तादृशयोग्यान्तं क्रियांशे विशेषणम्।

आदिपदेत्यादि—आदिपदग्राह्येण चेष्टारूपेण हेतुनेत्यर्थः। अनुमान इति—वक्ष्यमाणप्रयत्नवदधिष्ठितत्वानुमान इत्यर्थः।

अन्यथेति—मनःकर्म्मणः प्रयत्नवत्प्रयोज्यत्वानङ्गीकारे। तथाहि सुषुप्तौ मनःकर्म्मप्रयोजकात्मप्रयत्नविरहादेव न मनःकर्म्म तदभावाच्च विषयेन्द्रियसंसर्गविरह इति भावः।

तदुभयज्ञानञ्चेत्यादि—तथाहि कस्यचिदभिमतस्य फलस्य रूपसन्दर्शनेन तत्सजातीयफलान्तरसहचरितस्य पूर्वानुभूतरसस्य स्मरणात् तत्राभिलाषो भवति, ततोऽपि प्रयत्नः आत्ममनःसंयोगसापेक्षो रसनेन्द्रियविक्रियां जनयति, सा च दन्तोदकसंप्लवानुमिता रसनेन्द्रियविक्रिया इन्द्रियस्य चैतन्ये नोपपद्यते, प्रत्येकं नियताभ्यां चक्षूरसनाभ्यां रूपरसयोः सहचारप्रत्यये रूपदर्शनेन रस-

न्यभावात्; अस्ति चायं विकारः, तस्मादिन्द्रियातिरिक्तो विद्यत एव कश्चि-द्रुभयदर्शी यो रूपं दृष्ट्वा रसं प्रतिसन्धत्त इति प्राहुः।

अत्र इन्द्रियचैतन्यप्रतिषेधे प्रयोगस्त्वित्थं यथा—'नयनादीन्द्रियम् अचेतनं नियतविषयत्वात् गवाक्षवत्। यद्वा चेतनो नियतविषयेभ्यो भिद्यते प्रतिसन्धा-तृत्वात् प्राक्प्रत्यग्गवाक्षदर्शिवदिति। अन्यथा अन्येन दृष्टस्य अन्येन अस्मरणात् प्रतिसन्धानानुपपत्तौ इच्छानुपपत्तेर्विकारानुपपत्तिः कारणाभावादिति भावः' इत्याचार्य्याणां सन्दर्भः।

सुखादिकमित्यत्र आदिपदेन दुःखादीनामात्ममात्रगुणानामुपग्रहः। द्रव्य-वृत्तित्वमात्रस्य साध्यतायां कालिकेन कालवृत्तित्वमादाय अर्थान्तरमतः सम-वेतत्वं साध्यविधया उपन्यस्तम्। गुणत्वस्य समवायेन हेतुत्वम् अन्यथा व्यभिचारात्।

जन्मद्वयवर्त्त्यभिन्नेत्यादि—तथाहि योऽहमित्यादिवाक्यैः जन्मान्तरवृत्ति-पुण्यादिकर्म्मानुकूलकृतिमतः वर्त्तमानकालावच्छिन्नसुखाद्याश्रयस्य च योऽहं सोऽहमित्यादिनाऽभेदप्रतीतेः जन्मान्तरवर्त्तिनः एतत्कालवर्त्तिनश्चैकस्य तथा-भूतगुणाश्रयस्य असिद्धौ नोपपत्तिरिति शरीरेन्द्रियादीनां प्रतिजन्मभिन्नाना-मनित्यानां सुखाद्याश्रयत्वं न सङ्गच्छत इति भावः। अत एव 'इन्द्रियाणामपि जन्मद्वये भेदादिति' स्वयमेव वक्ष्यति।

इदञ्चेत्यादि—एकदेशमात्रवृत्तिगुणत्वरूपं हेत्वन्तरमित्यर्थः। एकदेश-मात्रवृत्तित्वञ्च अव्याप्यवृत्तित्वम्, संयोगविभागयोरव्याप्यवृत्तिगुणयोः शरीरे-न्द्रियवृत्तित्वात् तत्र तद्गुणत्वाभावरूपसाध्यवैकल्यादेव व्यभिचारः। निष्कर्षे तु संयोगविभागयोः स्पर्शवच्छरीरेन्द्रियगुणत्वेऽपि तयोर्विशेषगुणत्वाभावा-ददोषः। ये हि शरीरेन्द्रियविशेषगुणा रूपादयः, ते व्याप्यवृत्तय एव दृष्टाः। अव्याप्यवृत्तित्वञ्चेदं दैशिकं बोध्यं, तेन शरीरेन्द्रियादीनामुत्पत्तिकालाव-च्छेदेन रूपाद्यभावमादाय तद्विशेषगुणानामव्याप्यवृत्तित्वसत्त्वेऽपि न व्यभि-चारतादवस्थ्यम्। अत एव प्रदेशवृत्तित्वादित्यस्य एकदेशमात्रवृत्तिगुणत्वा-दित्यर्थः कृतो जगदीशेन। अव्याप्यवृत्तौ शब्दे श्रोत्ररूपेन्द्रियविशेषगुणत्व-सत्त्वाद् व्यभिचारभिया शरीरेन्द्रियविशेषगुणत्वाभावस्य साध्यतामनादृत्य स्पर्शवद्विशेषगुणत्वाभावस्य साध्यत्वमादृतमिति मन्तव्यम्। कन्दलीकारास्तु

यथाश्रुतमेवार्थमुपादाय 'कर्णशष्कुल्यवच्छिन्नस्य नभोदेशस्य श्रोत्रेन्द्रियभावमापन्नस्य यः शब्दो गुणो भवति स तद्विवरव्यापीत्यव्यभिचार' इति समादधते। आचार्य्यास्तु 'ताभ्यां हेतुभ्याम् इन्द्रियगुणत्वममीषां न निषिद्धं शब्देन व्यभिचारात्' इत्याद्युपक्रम्य हेत्वन्तरोपन्यासबीजत्वमस्य समुद्भावितवन्तः।

कदाचिदिति—सुषुप्तौ मोक्षदशायां च आत्मनः सुखादिजातीययावदभाववत्त्वम् 'अशरीरं वा वसन्तं प्रियाप्रिये न स्पृशतः' इत्यादिश्रुत्यादिभ्यः। तदानीमदृष्टादिसमुच्छेदात् तत एव सुखाद्यसम्भवाच्च।

यथोक्तराहित्याभावादिति—वाह्येन्द्रियप्रत्यक्षवृत्तिगुणत्वव्याप्यजातिराहित्यरूपहेत्वभावादित्यर्थः। वाह्येन्द्रियचक्षुरादिप्रत्यक्षघटरूपादिवृत्तिगुणत्वव्याप्यरूपत्वादिजातिश्चक्षुरादीन्द्रियगुणे सत्त्वादिति भावः।

सुखादिकन्त्विति—सुखादीनां सर्वेषामपि वहिरिन्द्रियजन्यप्रत्यक्षाविषयतया तद्वृत्तिगुणत्वव्याप्यजातीनां सुखत्वादीनां तथात्वाभावात् तथाभूतजातीनां रूपत्वादीनाञ्च तत्र राहित्येन न स्वरूपासिद्धो हेतुः।

विहितेत्यादि—'स्वर्गकामोऽश्वमेधेन यजेत' इत्यादिविधिना प्रतिपादितस्य अश्वमेधे स्वर्गजनकत्वस्य स्वर्गनियतपूर्ववर्त्तित्वलक्षणस्य अन्तरा धर्म्मास्वीकारे अनुपपत्त्या अश्वमेधयागादिजन्यं किमप्यपूर्वं कल्पनीयं, येन स्वर्गाव्यवहितप्राक्कालपर्य्यन्तस्थायिना द्वारीकृतेन यागादिर्जनकः स्यात् इति भावः। अत एव कुसुमाञ्जलौ श्रीभगवदुदयनाचार्य्याः 'चिरध्वस्तं फलायालं न कर्म्मातिशयं विना' इति प्राहुः

व्यधिकरणेत्यादि—कार्य्यकारणयोरैकाधिकरण्यस्य शास्त्रादिसिद्धान्तितत्वादिति शेषः।

नानात्मान इत्यादि—अत्र 'व्यवस्था प्रतिनियमः, यथा कश्चिदाढ्यः, कश्चित् रङ्कः कश्चित् सुखी कश्चिद्दुःखी कश्चिदुच्चाभिजनः, कश्चिन्नीचाभिजनः, कश्चिद्विद्वान् कश्चित् जाल्म इतीयं व्यवस्था आत्मभेदमन्तरेणानुपपद्यमाना साधयत्यात्मनां भेदम्' इत्युपस्कारकाराणामाशयोऽनुसन्धेयः। एतेन वेदान्ताद्यपच्छिन्नमात्मैक्यमतं प्रत्युक्तम्भवति। आत्मनां भेदबोधकानि युक्त्यन्तराणि श्रुत्यन्तराणि च आकरेभ्यो ज्ञातव्यानि।

प्रत्यक्षेत्यादि—प्रत्यक्षे आश्रयमहत्त्वस्य कारणतया आत्मनः परमाणुपरि-

মাত্রবত্ত্বে মহত্ত্বাভাবাৎ তদাশ্রিতজ্ঞানাদিগুণানাং প্রত্যক্ষাসম্ভবাদিতি ভাবঃ।

অথাত্মমাবিত্যাদি—অনয়া পরীক্ষয়া জৈনানামাত্মগতো দেহসমপরিমাণবাদঃ প্রতিক্ষিপ্তঃ।

তদেবম্ আত্মনঃ সগুণত্বসিদ্ধ্যা কপিলাদিনিরুক্তমাত্মনির্গুণত্বমতং প্রত্যুক্তং, নির্গুণত্বপ্রতিপাদকশ্রুতয়স্তু জীবস্য মোক্ষদশানুবাদিকা ইতি।

---

## ভাষ্যতাৎপর্য্য।

সম্প্রতি আত্মার নিরূপণ করা হইতেছে. আত্মা দ্বিবিধ জীবাত্মা ও পরমাত্মা। আত্মত্বজাতি জ্ঞানবত্তার অবচ্ছেদকরূপে সিদ্ধ হয়। কাজেই জীবাত্মা ও পবমাত্মা উভয় পদার্থেই জ্ঞানবত্ত্ব থাকায আত্মত্বজাতিও উভয পদার্থেই স্বীকার করিতে হইবে। যাহারা সুখাদি পদার্থেব সমবায়িকাবণতাবচ্ছেদকরূপে আত্মত্ব-জাতির সিদ্ধি কবেন, তন্মতে ঈশ্বরে আত্মত্বজাতিব সত্তাবিষয়ে বিসংবাদ পবিলক্ষিত হয়। বিস্তৃতি ভয়ে তাহার আলোচনা পরিত্যক্ত হইল।

উক্ত আত্মত্বজাতি অন্য আত্মায় প্রত্যক্ষ না হইলেও যোগিব্যক্তিব আত্মায় উহার মানস প্রত্যক্ষ হইয়া থাকে। এবং সুখাদিবিশিষ্টরূপে আত্মার প্রত্যক্ষকালে তদ্‌বৃত্তি আত্মত্ব নিজ আত্মায়ই অযোগিব্যক্তিবও প্রত্যক্ষ হয। যেমন পৃথিবীত্ব ও দ্রব্যত্বপ্রভৃতি জাতিব ঘটাদিতেই চাক্ষুষ হয়, পবমাণুতে চাক্ষুষ হয় না সেইরূপ।

উক্ত আত্মা বহিরিন্দ্রিয়দ্বারা গৃহীত হইবাব যোগ্য নহে, কিন্তু শব্দাদিজ্ঞানদ্বারা অনুমিত শ্রোত্রপ্রভৃতি ইন্দ্রিয় হইতেই উহার অনুমান কবা যায়। অর্থাৎ দেখা যায় যে শ্রোত্রপ্রভৃতি ইন্দ্রিয় অচেতন কবণরূপে শব্দাদিজ্ঞান উৎপাদন করে, অথচ করণ কর্ত্তাব ব্যাপার ব্যতিবেকে কখনও কার্য্য কবিতে পারে না, অতএব এমন এক একটী চেতন কর্ত্তা প্রত্যেক শ্রোত্রাদি ইন্দ্রিয়ের অধিষ্ঠাতা বর্ত্তমান বহিয়াছে, যাহার প্রেরণায় শ্রোত্রাদি করণসমূহ নিজ নিজ কার্য্যসাধন করিতে পাবে। যেমন দাত্রপ্রভৃতি ছেদনসাধক অস্ত্রবিশেষ কর্ষকপ্রভৃতি কর্ত্তাব প্রেরণায়ই

ধান্যাদিচ্ছেদনে সমর্থ হয়, কর্ত্তার প্রেরণ ব্যতিরেকে কখনই ধান্যাদিচ্ছেদনে সমর্থ হয় না।

শব্দাদিজ্ঞানদ্বারাও ঐরূপ আত্মার অনুমান হইয়া থাকে। কারণ ভাবকার্য্য বস্তুমাত্রই কোনও বস্তুতে সমবায়সম্বন্ধে আশ্রিত থাকিবে, জ্ঞানও যখন কার্য্যভাববস্তু তখন উহা কোনও বস্তুতে নিশ্চয়ই সমবায়সম্বন্ধে থাকে। এইরূপে জ্ঞানের আশ্রয় আত্মা সিদ্ধ হয়। জ্ঞানদ্বারা যে আশ্রয়ীভূত দ্রব্যের সিদ্ধি হয়, উহা শরীর ইন্দ্রিয় বা মন নহে, কারণ শরীরাদি অচেতন পদার্থ, কাজেই জ্ঞানের আশ্রয়রূপে শরীরাদির সিদ্ধিদ্বারা গতার্থতাহেতু আত্মার অসিদ্ধি বলা যাইবে না। শরীর ভূতাত্মক ও কার্য্যবস্তু বলিয়া তাহাতে চৈতন্যস্বীকার অসম্ভব, ইহা ঘটাদিপদার্থের দৃষ্টান্তে বলা যায়। কারণ ভূতাত্মক ও কার্য্যবস্তু শরীরকে চৈতন্যের আশ্রয় বলিলে মৃতশরীরেও আকারগত কোনরূপ বৈলক্ষণ্যাদি না থাকায় উক্ত অবস্থায়ও চৈতন্য থাকিতে পারে? ইহা দ্বারা চার্ব্বাকের দেহাত্মবাদ নিরস্ত হয়।

বহিরিন্দ্রিয়সমূহকেও চৈতন্যের আশ্রয় স্বীকার করা যায় না, কারণ ইন্দ্রিয়-সমূহ জ্ঞানের করণ মাত্র, জলানয়নপ্রভৃতি কার্য্যে করণস্বরূপ ঘটাদিই উহার দৃষ্টান্ত। 'যাহা করণ হইবে তাহা চৈতন্যের আশ্রয় হইবে না,' এইরূপ নিয়মে আশঙ্কা হইলে অপর হেতুরও উপন্যাস করা যাইতে পারে, যথা ইন্দ্রিয় নষ্ট হইলেও পূর্ব্বানুভূত ইন্দ্রিয়ার্থের স্মরণ হইযা থাকে। স্মরণের প্রতি অনুভব কারণরূপে ক্লৃপ্ত আছে, ইন্দ্রিয়কে চৈতন্যের আশ্রয় বলিলে উক্ত অনুভবের আশ্রয় ইন্দ্রিয়কেই বলিতে হইবে। অতএব পরে যে অনুভবাধীন স্মৃতি হইবে, তাহাও উক্ত ইন্দ্রিয়ে থাকিতে হয়, অথচ উক্ত ইন্দ্রিয়রূপ আশ্রয়ের অভাবহেতু ঐ স্মৃতিই অসম্ভব হইয়া ওঠে। এক ইন্দ্রিয়ে অনুভব ও অপর ইন্দ্রিয়ে স্মৃতি ইহা কার্য্যকারণের সামানাধি-করণ্যনিয়মানুরোধেই স্বীকার করা চলে না।

এইরূপ ইন্দ্রিয়ার্থের অসন্নিকর্ষাবস্থাতেও বিষয়ের স্মৃতি হইয়া থাকে। যদি ইন্দ্রিয়কে জ্ঞানের আশ্রয় বলিতে হয়, তবে যে ইন্দ্রিয় হইতে যে জ্ঞান উৎপন্ন হইবে, সেই ইন্দ্রিয়কেই সেই জ্ঞানের আশ্রয় বলিতে হইবে। তাহা না হইলে অতিপ্রসঙ্গ দোষ হয়। অতএব বিষয়ের অসন্নিকর্ষদশায় উৎপন্ন স্মৃতির আশ্রয় কে হইতে পারে? সে স্থলে ত ইন্দ্রিয় উক্ত জ্ঞানের জনক নহে। এই কারণে উক্ত দুই অবস্থায় উৎপন্ন স্মৃতির আশ্রয়রূপে আত্মা সিদ্ধ হইয়া থাকে।

এখন আপত্তি হইতে পারে এই যে ভূতত্ব কার্য্যত্বপ্রভৃতি হেতু থাকায় বহিরিন্দ্রিয়কে জ্ঞানের আশ্রয় স্বীকার করিতে না পারিলেও ভূতত্ব কার্য্যত্বপ্রভৃতি ধর্ম্মশূন্য মনকে জ্ঞানের আশ্রয় বলিতে বাধা কি? তাহার উত্তরে গ্রন্থকার বলেন যে মনও চৈতন্যের আশ্রয় হইতে পারে না, কারণ তাহা হইলে মন জ্ঞানের কর্ত্তা হয়, করণ হয় না এবং তাহা হইলে একদা বহুবস্তুর জ্ঞানোৎপত্তির প্রসঙ্গ হয়। কারণ করণ যেরূপ একটীমাত্র ব্যাপারের একদা উৎপাদন করে, সেইরূপ কর্ত্তাও একদা একটীমাত্র ব্যাপার উৎপাদন করিবে, এমন নিয়ম নাই। অতএব এমন একটী বস্তু স্বীকার করিতে হয়, যাহার সম্বন্ধ একদা কেবল একটী বস্তুর সহিতই হইবে এবং তন্নিবন্ধন একটীমাত্র বস্তুরই একদা আলোচনা ও স্মৃতি হইবে। উহাই করণরূপী মন। এখন আর তবে উহাকে জ্ঞানের আশ্রয় বলা চলে না, কারণ করণ হইলেই তাহা কর্ত্তার প্রেরণা অপেক্ষা করিবে, অতএব প্রেরক কর্ত্তা তদপেক্ষা ব্যতিরিক্ত।

করণরূপে মনের অনুমান করিয়া তাহাতেই জ্ঞানের অনুমান করা যাইবে ইহাও বলা যায় না, কারণ প্রথমতঃ জ্ঞানের আশ্রয় সিদ্ধ না হইলে জ্ঞানের সিদ্ধি হইতে পারে না এবং জ্ঞানের সিদ্ধি না হইলে জ্ঞানকরণত্বদ্বারা মনের অনুমানই হইতে পারে না। অতএব যে জ্ঞানদ্বারা করণরূপে মনের অনুমান করিতে হইবে উক্ত জ্ঞানের আশ্রয় মন হইতে ভিন্ন এবিষয়ে সন্দেহ নাই।

মন যে জ্ঞানের আশ্রয় নহে এ বিষয়ে আত্মকার্য্যত্বও হেতু হইতে পারে, অর্থাৎ চৈতন্য আত্মার কার্য্য, অতএব উহা আত্মাতে থাকে। সমবায়সম্বন্ধে কার্য্যের প্রতি যে বস্তু অভেদসম্বন্ধে কারণ, উক্ত কার্য্যের আশ্রয় উক্ত কারণকে অবশ্যই স্বীকার করিতে হইবে। যদি জ্ঞানকে উক্তরূপে মনের কার্য্য ও মনের ধর্ম্ম বলা যায়, তবে জ্ঞানাদির প্রত্যক্ষ অসম্ভব হইয়া পড়ে, কারণ প্রত্যক্ষের প্রতি মহত্ত্বকে কারণ বলা হইয়াছে, মন অণুপরিমাণ, অতএব অণুপরিমাণ মনে জ্ঞান থাকিলে জ্ঞানের প্রত্যক্ষ হইতে পারে না ইত্যাদি দোষ দ্রষ্টব্য। যদি মনকে অণুপরিমাণ না বলিয়া পরমমহৎ-পরিমাণ বস্তু স্বীকার করা যায়, তবে একদা অনেক জ্ঞানের উৎপত্তি হইতে পারে, এইজন্য তদ্ভিন্ন আর একটী অণুপরিমাণ মন জ্ঞানের করণরূপে অবশ্যই মানিতে হয়, তাহা হইলে পরমমহৎপরিমাণ জ্ঞানের আশ্রয় অতিরিক্ত বস্তু মানিতেই হইল, কেবল সংজ্ঞা হইল তাহার মন, তাহাতে আর আপত্তির বিষয় কি?

শব্দাদির জ্ঞান দ্বারা যেরূপ আশ্রয়রূপে নিজ আত্মার অনুমান হয়, ঐরূপ পরশরীরে হিতপ্রাপ্তি ও অহিতপরিহারের কারণ প্রবৃত্তি ও নিবৃত্তিজন্য ক্রিয়া দর্শনে চেতনাধিষ্ঠান অনুমিত হইতে পারে ঐ স্থলে রথক্রিয়াদ্বারা যেমন সারথির অনুমান হয় এই দৃষ্টান্ত উপন্যাস করা যায়। অর্থাৎ অচেতন কোনও বস্তু হিত-প্রাপ্তি ও অহিতপরিহারের কারণীভূত প্রবৃত্তি ও নিবৃত্তিজন্য ক্রিয়াযুক্ত হইতে গেলে চেতনের অধিষ্ঠানব্যতীত হয় না, এই হেতু অচেতন শরীরও চেতনের অধিষ্ঠান ব্যতীত ঐরূপ ক্রিয়ার আশ্রয় কিরূপে হইতে পারে, অতএব শরীরের অধিষ্ঠাতা এক আত্মা আছে, যাহার সংযোগবশতঃ অচেতন শরীরও তাদৃশ ক্রিয়ার আশ্রয় হইয়া থাকে।

প্রাণাদি বায়ুর উর্দ্ধগতি ও অধোগতি প্রভৃতি দ্বারাও আত্মার অনুমান হইয়া থাকে। কারণ বায়ুর স্বাভাবিক গতি বক্র, উহা বেগপ্রতিরোধক কোনও বস্তু না থাকিলে চেতনের অধিষ্ঠান ব্যতীত কখনই বক্রগতি পরিত্যাগ করিয়া উর্দ্ধগতি বা অধোগতি লাভ করিতে পারে না। ঐ স্থলে কর্ম্মকারের ভস্ত্রা বা হাপোষের ক্রিয়াজনক কর্ম্মকার দৃষ্টান্ত।

ঐরূপ চক্ষুর স্বাভাবিক নিমেষ ও উন্মেষ কর্ম্মদ্বারাও অচেতন শরীরের অধিষ্ঠাতা আত্মার অনুমান হয়। এস্থলে দারুময়যন্ত্রের নিমেষ ও উন্মেষ ক্রিয়াদ্বারা অনুমিত দারুযন্ত্রের পরিচালক শিল্পীই দৃষ্টান্ত।

আরও গৃহের পরিপুষ্টি ক্ষত ও ভগ্নাবস্থার পুনর্ব্বার পূর্ব্বাবস্থাসম্পাদনপ্রভৃতি-দ্বারা যেমন অচেতন গৃহের অধিষ্ঠাতা একজন গৃহস্থ অনুমিত হয়, সেইরূপ দেহের পরিপুষ্টি ক্ষত ও ভগ্নাবস্থার পুনর্ব্বার পূর্ব্বাবস্থাসম্পাদন ও চেষ্টাপ্রভৃতিদ্বারা অচেতন দেহের অধিষ্ঠাতা আত্মা অনুমিত হইয়া থাকে।

অন্য হেতু যথা—যেমন গৃহকোণে অবস্থিত একটী জতুগোলকে অপর জতুগোলকের চালনা করিয়া বালক যখন ক্রীড়া করিতে থাকে, তখন ঐ জতু-গোলকের সংযোগসাধকক্রিয়া দ্বারা তৎপরিচালক বালক অনুমিত হয়, সেইরূপ বহু বিষয় সন্নিহিত থাকিলেও অভিমত বিষয়ে চক্ষুঃসংযোগের কারণ মানসিক ক্রিয়াদ্বারাও তদধিষ্ঠাতা আত্মার অনুমান হয়।

অন্য হেতু যথা—চক্ষুর বিষয়ীভূত অম্লদ্রব্য তিন্তিড়ী (তেঁতুল) প্রভৃতি দর্শনের পর রসের স্মৃতিক্রমে রসনেন্দ্রিয়ের বিকার হইতেও আত্মার অনুমান করা যাইতে

পারে। কারণ উক্তস্থলে প্রথমতঃ অম্লদ্রব্যের দর্শন ও তদনন্তর রসের স্মরণ ব্যতীত রসনেন্দ্রিয়ের বিকার অসম্ভব, অতএব অম্লদ্রব্যের জ্ঞান ও রসস্মৃতি এই উভয়ের আশ্রয় ব্যতিরেকে অনুপপত্তিহেতু তদুভয়ের আশ্রয় শরীরাধিষ্ঠাতা আত্মা সিদ্ধ হয়।

এইরূপ সুখাদি গুণদ্বারাও আত্মার অনুমান হয়। অর্থাৎ সুখ যখন গুণ-পদার্থ তখন উহা কোনও দ্রব্যে সমবেত থাকিবে, উক্ত দ্রব্যই আত্মা। শরীরাদিকে সুখাদির আশ্রয় বলা যায় না, কারণ তাহা হইলে 'অহং সুখী' ইত্যাদিরূপে অহঙ্কারের সহিত সুখাদির সামানাধিকরণ্য প্রতীতির বিরোধ ঘটে। এবং শরীরের বিনাশিত্বহেতু জন্মান্তরে সুখকামনায় বৈধকার্য্যপ্রবৃত্তি অনুপপন্ন হয়। অর্থাৎ বৈধকার্য্য করিলে তন্নিবন্ধন যে ধর্ম্ম উৎপন্ন হয়, তাহা হইতেই জন্মান্তরে সুখ উৎপন্ন হয়, উক্ত ধর্ম্ম শরীরবৃত্তি স্বীকার করিলে প্রতিজন্মে শরীরের ভিন্নতা হেতু পূর্ব্বজন্মের শরীর পরজন্মে না থাকায় আশ্রয়ের অভাবহেতু ধর্ম্মেরও স্থিতি অসম্ভব হওয়ায় সুখ উৎপন্ন হইবে কোথায়? তবে আর তদভিপ্রায়ে ধর্ম্মাচরণ কিরূপে সঙ্গত হইতে পারে ইত্যাদি। অতএব এমন পদার্থকে আত্মা বলিয়া স্বীকার করিতে হইবে, যাহা জন্মান্তরেও সমভাবে অবস্থান করিয়া ধর্ম্মাধর্ম্মাদির আশ্রয় হইবে।

'যোঽহং গৌর আসং' অর্থাৎ যে আমি গৌরবর্ণ ছিলাম 'সোঽহং সম্প্রতি কৃষ্ণঃ' সেই আমি এখন কৃষ্ণবর্ণ ইত্যাদিরূপে গৌরত্ব ও কৃষ্ণত্ব শরীরের ধর্ম্ম যে আত্মার ধর্ম্ম বলিয়া প্রতীত হয়, উহা ভ্রমমাত্র, কারণ পূর্ব্বোক্ত প্রতীতি দ্বারা উহা বাধিত হইয়া থাকে। অবস্থাভেদে শরীরের ভেদ থাকায় উক্ত গৌরত্ব ও কৃষ্ণত্বের সামানাধি-করণ্য প্রতীতিকেও ভ্রম বলিয়াই স্বীকার করিতে হয়। ইন্দ্রিয়সমূহও জন্মান্তরে বিভিন্ন বলিয়া পূর্ব্বোক্ত দোষেই ইন্দ্রিয়কেও সুখাদির আশ্রয় স্বীকার করা যায় না।

অন্য হেতুদ্বারাও সুখাদি যে শরীর বা ইন্দ্রিয়ের গুণ নহে ইহা সাধন করা যাইতে পারে; যথা—'পাদে মে সুখং' অর্থাৎ আমার চরণভাগে সুখ এবং 'শিরসি মে বেদনা' অর্থাৎ আমার মস্তকভাগে দুঃখ এইরূপে সুখ ও দুঃখাদির একদেশমাত্রবৃত্তিত্ব প্রতীত হয় বলিয়া উহা শরীর বা ইন্দ্রিয়ের গুণ হইতে পারে না। শরীর বা ইন্দ্রিয়ের গুণ রূপাদি ব্যাপ্যবৃত্তি, অব্যাপ্যবৃত্তি নহে। একদেশপদ-দ্বারা এস্থলে অব্যাপ্যবৃত্তিত্ব দৈশিক ধরিতে হইবে। অতএব উৎপত্তিকালে শরীর

ও ইন্দ্রিয়ে রূপাদির অভাববশতঃ তাহাতে কালিক অব্যাপ্যবৃত্তিত্ব থাকিলেও ব্যভিচার হইবে না।

অন্য হেতুদ্বারাও উহা সাধন করা যায় যথা,—সুখাদির আশ্রয় বর্ত্তমান থাকিতেও যখন ঐ আশ্রয়ে স্বসমানজাতীয় সমস্ত সুখ দুঃখাদিগুণের অভাব থাকে, তখন উহা শরীর বা ইন্দ্রিয়ের গুণ নহে। শরীর বা ইন্দ্রিয় কখনও স্বীয় গুণ রূপাদি সমস্তগুণের অভাবযুক্ত দেখা যায় না। ইহাও উৎপত্তিক্ষণ ব্যতীতই বুঝিতে হইবে। তাহা না হইলে উৎপত্তিক্ষণে শরীরাদিতে উক্ত অভাব থাকায় ব্যভিচার হইতে পারে।

অন্য হেতুদ্বারাও উহা সাধন করা যায় যথা,—সুখাদি যখন বাহ্যেন্দ্রিয়প্রত্যক্ষের বিষয়ীভূত গুণত্বব্যাপ্য জাতিশূন্য, তখন উহা শরীর বা ইন্দ্রিয়ের গুণ হইতে পারে না। ইন্দ্রিয়ের গুণ রূপাদিতে বাহ্যেন্দ্রিয়প্রত্যক্ষের বিষয়ত্ব না থাকিলেও বাহ্যেন্দ্রিয়প্রত্যক্ষের বিষয়ীভূত গুণত্বব্যাপ্য রূপত্বাদি জাতি থাকায় ব্যভিচারের আশঙ্কা নাই।

অপর হেতু দ্বারাও উহা সাধন করা যায় যথা,—অহংশব্দার্থের সহিত 'অহং শরীরী' অর্থাৎ আমার শরীর আছে এইরূপ ভেদপ্রতীতিই হইয়া থাকে, 'অহং শরীরং' অর্থাৎ আমি শরীর এরূপ অভেদপ্রতীতি হয় না, অতএব আত্মা শরীর-ভিন্ন। উক্ত অনুভব ও যুক্তিসমূহদ্বারা এইরূপে অবাধে আত্মপদার্থ অতিরিক্ত সিদ্ধ হইয়া থাকে।

উক্ত আত্মায় জ্ঞান, সুখ, দুঃখ, ইচ্ছা, দ্বেষ, প্রযত্ন, ধর্ম্ম, অধর্ম্ম, সংস্কার, সংখ্যা, পরিমাণ, পৃথক্ত্ব, সংযোগ ও বিভাগ এই চতুর্দ্দশটী গুণ আছে। উক্ত গুণ বৈশেষিকসূত্রকারের মত সিদ্ধ।

বৈশেষিকসূত্রে জ্ঞানাদিকে আত্মার লিঙ্গ বলা হইয়াছে, অতএব জ্ঞানাদি আত্মার গুণ স্বীকার না করিলে ঐ উক্তি অসঙ্গত হয়।

বিহিত ও নিষিদ্ধ কর্ম্ম হইতে ধর্ম্ম ও অধর্ম্ম উৎপন্ন হয়, ইহা স্বীকার না করিলে কালান্তরে সুখ দুঃখাদির উৎপত্তির বিরোধ ঘটে, কারণ কর্ম্ম বহুকাল পূর্ব্বে নষ্ট হইয়া যাওয়ায় কার্য্যের অব্যবহিত পূর্ব্বে না থাকায় উক্ত কর্ম্মকে সুখদুঃখাদির কারণ বলা যায় না। এই জন্য এমন একটী বস্তু স্বীকার করিতে হয়, যাহাকে দ্বার করিয়া সুখ দুঃখাদির প্রতি কর্ম্ম কারণ হইতে পারে। ঐ বস্তুই ধর্ম্ম ও অধর্ম্ম।

স্মৃতির প্রতি পূর্ব্বানুভব কারণ, যেহেতু অননুভূত বিষয়ের কদাপি স্মৃতি হয় না। অনুভবও বহুপূর্ব্বে নষ্ট হইয়া যায়, স্মৃতির পূর্ব্বে থাকে না, অতএব সংস্কার নামে একটী গুণ উহার দ্বাররূপে সিদ্ধ হয়।

আত্মার সংখ্যা বহুত্ব ও পরিমাণ পরমমহৎ। কারণ আত্মা এক স্বীকার করিলে কেহ মুক্ত, কেহ বদ্ধ; কেহ সুখী, কেহ দুঃখী ইত্যাদি বিভিন্নরূপ ব্যবস্থা প্রভৃতি সঙ্গত হয় না। উক্ত যুক্তিদ্বারা বেদান্তের একাত্মবাদ মত খণ্ডিত হইয়া থাকে। আত্মার পরমমহৎপরিমাণ স্বীকার না করিলে মূর্ত্তত্ব স্বীকার করিতে হয়, উহা অত্যন্ত অন্যায্য, যেহেতু কারণান্তরবশতঃ আত্মার নিত্যত্ব সিদ্ধ থাকায় নিত্যত্ব ও মূর্ত্তত্ব এই উভয় স্বীকার করিলে উহাকে পরমাণু স্বরূপ বলিতে হয়, তাহাতে জ্ঞানাদির প্রত্যক্ষ হইতে পারে না ইত্যাদি নানা দোষ উপস্থিত হয়। যদি জ্ঞানাদির প্রত্যক্ষপ্রভৃতির উপপত্তির জন্য আত্মাকে অবয়বী স্বীকার করা হয়, তবে আত্মার নিত্যত্ব সম্ভব হয় না, কারণ এমন কোন সাবয়ব বস্তু নাই, যাহা নিত্য। অথচ শ্রুতি স্মৃতি ও যুক্তিবলে আত্মাকে নিত্যই স্বীকার করিতে হইবে। অতএব আত্মার পরিমাণ পরমমহৎ ইহাই সুসঙ্গত ইহা দ্বারা জৈনমতসিদ্ধ আত্মার দেহ-পরিমাণবাদ নিরস্ত হইয়াছে।

সুখাদির উৎপত্তি প্রভৃতির অনুরোধে আত্মার সংযোগ ও বিভাগাদিও মানিতে হইবে। আত্মা ও মনের সংযোগ সুখাদির কারণ। বিভাগ উক্ত সংযোগের নাশক। উহা স্বীকার না করিলে সর্ব্বদা সুখাদির উৎপত্তি হইতে আর বাধা থাকে না। ঐরূপে আত্মার চতুর্দ্দশটী গুণই সিদ্ধ হয়।

উক্ত যুক্তি প্রভৃতি দ্বারা আত্মার সগুণত্ব প্রমাণিত হওয়ায় কপিলাদিসম্মত আত্মার নির্গুণত্ব মত নিরস্ত হইয়াছে। মুক্তি অবস্থায় আত্মাতে কোনও বিশেষ-গুণ থাকে না বলিয়া নির্গুণত্ব শ্রুতিগুলি আত্মার মুক্তি অবস্থায়ই সঙ্গত হইতে পারে।

---

प्रशस्तपादभाष्यम्

मनस्त्वाभिसम्बन्धान्मनः(१) सत्यप्यात्मेन्द्रियार्थ-सान्निध्ये ज्ञानसुखादीना(२)मभूतत्वोत्पत्तिदर्शनात् * करणान्तरमनुमीयते। श्रोत्राद्यव्यापारे स्मृत्युत्पत्ति (३) दर्शनात् बाह्येन्द्रियैरगृहीतसुखादिग्राहकान्तराभावाच्च (४) अन्तःकरणम्।

तस्य गुणाः संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वसंस्काराः। प्रयत्नज्ञानायौगपद्यवचनात् प्रतिशरीरमेकत्वं(५) सिद्धम्। पृथक्त्वमत एव। तदभाववचनादणुपरिमाणम्। अपसर्पणोपसर्पणवचनात् संयोगविभागौ। मूर्त्तत्वात् परत्वापरत्वे संस्कारश्च। अस्पर्शत्वात् द्रव्यानारम्भकक्रियावत्त्वात् (६) मूर्त्तत्वम्। साधारणविग्रहवत्त्वप्रसङ्गात् अज्ञत्वम्। करण-

---

(१) मनस्त्वयोगान्मन इति पाठान्तरम्।

(२) सुखदुःखादीनामिति ज्ञानसुखदुःखानामिति च पाठान्तरे।

* सर्वत्र भाष्यादर्शेषु अभूत्वोत्पत्तिदर्शनादिति पाठो लभ्यते, परन्तु सूत्रादर्शानुरोधात् अभूतत्वोत्पत्तिदर्शनादिति पाठः कल्पितः।

(३) स्मृत्युपपत्तीति पाठान्तरम्।

(४) बाह्यान्तरभावाच्चेति पाठान्तरम्।

(५) प्रतिशरीरमेकमिति पाठान्तरम्।

(६) क्रियावचनादिति अस्पर्शवत्त्वात द्रव्यानारम्भकत्वं क्रियावत्त्वादिति च पाठान्तरम्।

भावात्(७) परार्थम्। गुणवत्त्वात् द्रव्यम्। प्रयत्नादृष्ट-परिगृहीतत्वाच्च आशुसञ्चारितेति(८)।

## इति प्रशस्तपादभाष्ये द्रव्यपदार्थः (९)

[आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावोऽभावश्च मनसो लिङ्गम्—३·अ·२आ·१सू। प्रयत्नायौगपद्याज्ज्ञानायौगपद्याच्चैकम्—३अ·२आ—३सू। तदभावादणु मनः—७अ·१आ·२३सू। अपसर्पणमुपसर्पणमशितपीतसंयोगाः कार्य्यान्तरसंयोगाश्चादृष्टकारितानि—५अ·२आ·१७सू। एकदिक्काभ्यामेककालाभ्यां सन्निकृष्टविप्रकृष्टाभ्यां परमपरञ्च—७अ·२आ·२१सू। तदलिङ्गमेकद्रव्यत्वात् कर्म्मणः—२अ·१आ·२१सू। तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते—३अ·२आ·२सू। इत्येतान्यालम्बनसूत्राणि।]

---

## जगदीशसूक्तिः

मन आह मनस्त्वेति। ज्ञानजनकसंयोगहेतुक्रियाजनकतावच्छेदको मनस्त्वं नाम जातिविशेषः। स च अतीन्द्रियः ऐन्द्रियकावृत्तित्वात् तदभिमतसम्बन्धादित्यर्थः। मनोऽभावे मनस्त्वाभावात् मनसि प्रमाणमाह सत्यपीति। आत्मन इन्द्रिये इन्द्रियस्यार्थे विषये साम्निध्ये सन्निकर्षे सत्यपि ज्ञानसुखादीनामभूतत्वोत्पत्तिदर्शनात् कदाचिदभूतत्वकदाचिदुत्पन्नत्वदर्शनात् करणान्तर(१०)मनुमीयत इत्यर्थः। तच्च करणं मन इत्यर्थः। अयमर्थः—आत्मेन्द्रियार्थसान्निध्ये कारणे सत्यपि ज्ञानसुखादीनामभूतत्वं कारणान्तरविरहादेव, अनन्तरं तेषामुत्पत्तिश्च

---

(७) स्वयं करणभावादिति पाठान्तरम्।

(८) परिग्रहवशादाशुसञ्चारि चेति पाठान्तरम्।

(९) प्रशस्तकरीयभाष्ये इति प्रशस्तदेवाचार्य्यविरचिते वैशेषिकभाष्ये इति च पाठान्तरे।

(१०) कारणान्तरमिति पाठान्तरम्। भाष्येऽपि तत्र तत् पाठान्तरं सम्भाव्यते।

कारणान्तरप्राप्त्या इत्यतस्तत्कारणमन्यासम्भवात् मन एव कल्प्यत इत्यर्थः। अन्यासम्भवस्तु अन्यस्मिन् समस्ते सत्यपि तदनुत्पत्तिदर्शनाद् बोध्यः।

मनःसाधकं हेत्वन्तरमाह श्रोत्रादीति। ननु स्मृतिरिन्द्रियेणैव जन्यत इत्यत आह श्रोत्रादीति—श्रोत्रादीन्द्रियाणामव्यापारे सत्यपीत्यर्थः। न च (११) स्मृतिः संस्कारेणैव जन्यतां किं मनसेति वाच्यं स्मृतेः कादाचित्कत्वानुपपत्तेः। संस्कारस्य तत्पूर्वमपि सत्त्वात् व्याप्रियमाणं मनः सहकारित्वं यदा समासादयति, तदा संस्कारः स्मृतिं जनयति, नान्यदेत्यविरोधः।

मनःसाधकं हेत्वन्तरमाह वाह्येति—ग्राहकत्वाभावादिति। अनेनेन्द्रियविशेषग्राह्यत्वमनुमेयमिति दर्शितम्। तथा च सुखादिकमिन्द्रियग्राह्यम् वाह्येन्द्रियाग्राह्यत्वे सति ग्राह्यत्वादितीन्द्रियविशेषो मनः सिध्यतीत्यर्थः।

तस्य गुणानाह तस्य गुणा इति। परत्वापरत्वे दैशिके। संस्कारो वेगाख्यः। तत्र संख्यां साधयति प्रयत्नज्ञानेति। प्रतिशरीरमेकत्वं एकैकत्वमित्यर्थः। अत्र हेतुमाह प्रयत्नज्ञानेति—प्रयत्नानां ज्ञानानाञ्च युगपदुत्पत्त्यभावादित्यर्थः। प्रतिशरीरमनेकत्वे अनेकैर्मनोभिर्युगपदनेकप्रयत्ना अनेकानि ज्ञानानि चोत्पद्येरन् इत्यर्थः। प्रयत्नोऽत्र ज्ञानजनकसंयोगहेतु-मनःक्रियाजनकः, ज्ञानायौगपद्यादेव तदयौगपद्यमुन्नेयम्।

पृथक्त्वमत एवेति अनेकत्वादेवेत्यर्थः। तस्याणुपरिमाणे सूत्रकारसम्मतिमाह तदभावेति। तदभावादणु मन इति सूत्रे तत्पदेन वैभवं परामृष्टं, वैभवाभावादणु इत्यर्थः। वैभवाभाव एव मनसः कुत इति चेद् युगपज्ज्ञानाभावात्। वैभवे सति एकदा सकलेन्द्रियसन्नि-

(११) ननु इति पाठान्तरम्।

कथं युगपदनेकानि ज्ञानादीनि स्युः। न चैवम् वैभवाभावादपरमहत्त्व-मेवास्तु, अणुत्वं कुतः, अपरमहत्त्वेऽपि वैभवाभावोपपत्तेरिति वाच्यं अपरमहत्त्वेऽपि ज्ञानयौगपद्यापत्तेर्दुर्वारत्वात्।

संयोगविभागसिद्धौ सूत्रकारसम्मतिमाह अपसर्पणेति। अपसर्पण-मुपसर्पणमशितपीतसंयोगाः कार्य्यान्तरसंयोगाश्चादृष्टकारितानीति सूत्रवचने चापसर्पणं पूर्वशरीरसंयोगनाशकविभागहेतुर्मनःकर्म्म, उप-सर्पणमुत्तरशरीरसंयोगहेतुमनःक्रिया ततः संयोगविभागौ सिद्धा-वित्यर्थः।

मूर्त्तत्वादिति—मनः परत्वापरत्ववत् वेगाख्यसंस्कारवच्च मूर्त्त-त्वात् घटवदित्यनुमानात् मनसि परत्वापरत्वसंस्काराः सिद्धा इत्यर्थः। तस्य मूर्त्तत्वं साधयति अस्पर्शत्वादिति। द्रव्यारम्भिका क्रिया स्पर्श-वतामेव मनसस्त्वस्पर्शत्वात् द्रव्यानारम्भिकैव क्रिया तद्वत्त्वान्मूर्त्तत्व-मित्यर्थः। यद्यपि क्रियावत्त्वादेव मूर्त्तत्वं सिध्यति तथापि द्रव्या-रम्भिका क्रिया मनसो नास्तीत्येतत्प्रदर्शनपरमेव द्रव्यानारम्भि[भ]केति क्रियाविशेषणम्। अस्पर्शत्वात् द्रव्यानारम्भिका क्रिया ततो मूर्त्तत्व-मित्यर्थः।

ननु मनसो ज्ञानकरणत्ववत् ज्ञातृत्वमपि स्यादविरोधादित्यत आह साधारणेति। मनोऽज्ञम् अज्ञातृ। तत्र हेतुमाह साधारणेति। विग्रहः शरीरं तद्वत्त्वं तदधिष्ठितत्वं शरीरस्य आत्मसाधारण्येन मनो-ऽधिष्ठितत्वप्रसङ्गादित्यर्थः। शरीरमात्मना मनसा च ज्ञात्रा अधिष्ठितं स्यादिति क्रियावत्। न च तथात्वे किमनिष्टमिति वाच्यं चैत्रात्मनः पराधिष्ठिते शरीरे स्वेच्छया प्रवृत्तिनिवृत्त्यधीनक्रियाजननियमो न स्यात्। न हि मैत्रात्माधिष्ठिते शरीरे चैत्रात्मना प्रवृत्तिनिवृत्तिजन्य-क्रिया जन्यते, यदि च पराधिष्ठितत्वेऽपि स्वाधिष्ठिते प्रवृत्तिनिवृत्त्य-धीनक्रिया जन्यत इत्युच्यते, तदा तयोरेकेन प्रवृत्तौ अन्येन निवृत्तौ

इच्छया विरोधिन द्वयमपि न स्यात्। इत्थं मनसो न ज्ञातृत्वम्, किन्तु ज्ञानकरणत्वमेव। तथाच परनिष्ठज्ञानजनकत्वेन परार्थमेवेत्याह करणभावादिति करणत्वमात्रादित्यर्थः।

संख्याद्यष्टगुणास्तत्र साधिता अत एव तस्य द्रव्यत्वमित्याह गुणवत्त्वादिति। तस्याशुसञ्चारित्वे हेतुमाह प्रयत्नेति। क्वचिदात्मनः प्रयत्नेन क्वचिददृष्टेन परिगृहीतत्वाच्च आलिङ्गितत्वाच्च आशुसञ्चारित्यर्थः।

इति महामहोपाध्याय-श्रीजगदीशभट्टाचार्य्यतर्कालङ्कारकृता द्रव्यभाष्यसूक्तिः समाप्ता *।

---

## सूक्तिदीपिका

अथोद्देशक्रमप्राप्त्या द्रव्येषु मन एवेदानीं निरूपयितुमवशिष्यते, अतस्तदेवेदानीं निरूपयति इत्याह मन इत्यादि। मनस्त्वेत्यादिभाष्यग्रन्थस्य पूर्ववद् व्याख्यानमवसेयम्।

मन इति संज्ञायाः परिभाषिकत्वं वा नैमित्तिकत्वं वा औपाधिकत्वं वेति संशये मनस्त्वस्य जातित्वं निर्दिश्य मनःसंज्ञाया नैमित्तिकत्वमावेदयति ज्ञानेत्यादिना। जात्यवच्छिन्नवाचकशब्दस्य नैमित्तिकत्वमिति निरुक्तपूर्वमाकाशनिरूपणग्रन्थे सूक्तिदीपिकायामेवास्माभिः।

ज्ञानजनकेत्यादि—ज्ञानजनकसंयोगः आत्ममनःसंयोगः तद्धेतुः क्रिया मनःक्रिया आत्मनो विभुत्वेन निष्क्रियत्वात् कर्म्मजसंयोगे प्रतियोग्यनुयोगि क्रियाया एव जनकत्वात्। अतस्तत्क्रियाजनकतावच्छेदकतया मनस्त्वजातिसिद्धिः। तथा चायं प्रयोगः ज्ञानसामान्यजनकसंयोगहेतुक्रियाजनकता

---

* क्वचित् पुस्तके 'समाप्तोऽयं ग्रन्थ' इत्येतन्मात्रं, क्वचित् 'इति महामहोपाध्यायभट्टाचार्य्यतर्कालङ्कारकृत-द्रव्यभाष्यटोका समाप्ते'ति, क्वचिच्च 'इति श्रीजगदीशभट्टाचार्य्यकृता द्रव्यभाष्यसूक्तिः समाप्ते'ति पुष्पिका लभ्यते। अस्माभिस्तु सर्वासां विचारेण एषा पुष्पिका परिकल्पिता।

किञ्चिद्धर्म्मावच्छिन्ना जनकतात्वात् दण्डादिनिष्ठघटादिजनकतावत्, धर्म्मस्य जातित्वे लाघवमिति लाघवज्ञानसहकाराच्च अवच्छेदकतया सिद्धस्य धर्म्मस्य जातित्वसिद्धा मनस्त्वजातिसिद्धिरिति भावः।

ऐन्द्रियकावृत्तित्वादिति – इन्द्रियजन्यप्रत्यक्षविषयासमवेतत्वादित्यर्थः। तेन कालिकादिना मनस्त्वस्य ऐन्द्रियकघटादिवृत्तित्वेऽपि न स्वरूपासिद्धिः, कालिकादिसम्बन्धावच्छिन्नैन्द्रियकवृत्तित्वस्य तत्र सत्त्वेऽपि समवायसम्बन्धावच्छिन्नतादृशवृत्तित्वाभावस्य तत्रानपायात्।

तदभिमतेति—पूर्ववत् समवायसम्बन्धादित्यर्थः। अत्रापि तत्सम्बन्धमन्तर्भाव्य मन. पक्षीकर्त्तव्यमित्याद्यर्थोऽनुसर्त्तव्यः।

स्मृतेः कादाचित्कत्वानुपपत्तेरिति—न च संस्कारस्य उद्बोधकसमवधानेनैव स्मृतिजनकतानियमात् उद्बोधकानाञ्च अननुगमात् यत्र यत्र वस्तुगत्या स्मृतिस्तत्र तत्रैव वर्त्तमानानां वस्तुविशेषाणां क्लृप्तसंयोगादीनाम् उद्बोधकत्वकल्पनया स्मृतेः कादाचित्कत्वस्य शक्योपपादनत्वे किमित्यतिरिक्तेन मनसेति वाच्यं सम्बन्धिज्ञानादीनामनुगतोद्बोधकानामपि सत्त्वेन तत्समवधानस्थले स्मृतिप्रसङ्गस्य तथापि वारयितुमशक्यत्वादित्यादिकमूहनीयम्।

इन्द्रियविशेषेति—वाह्येन्द्रियभिन्नेन्द्रियविशेषेत्यर्थः। तथाहि प्रकृते इन्द्रियग्राह्यत्वसाधकनिरुक्तहेतुघटकसत्यन्तदलेन पक्षे इतरबाधस्य उपपन्नतया व्यापकतानवच्छेदक—वहिरिन्द्रियभिन्नेन्द्रियग्राह्यतात्वेन साध्यसिद्धा अतिरिक्तस्य मनसः सिद्धिरिति महानसीयवह्नीतरवह्न्यभाववत्पर्वतकालीनधूमादिहेतुना वह्निव्याप्यतादृशधूमवान् पर्वत इति परामर्शविषयेणापि पर्वते महानसीयवह्निसिद्ध्यादिवत्। इतरबाधलाघवज्ञानादिसहकारेण सामान्यव्याप्तिज्ञानादपि व्यापकतानवच्छेदकविशेषधर्म्मप्रकारेण साध्यसिद्धेः पक्षताप्रकरणादौ स्वयं जगदीशादिभिरुपदिष्टत्वात्।

दैशिके इति—कालिकपरत्वापरत्वयोरनित्यत्वव्याप्यतया नित्यस्य मनसो न कालिकपरत्वापरत्वयोर्ज्येष्ठत्वकनिष्ठत्वलक्षणयोः सम्भव इति मनसः परत्वापरत्वयोर्दैशिकत्वमवगन्तव्यमिति भावः।

प्रयत्नानामित्यादि—तथाहि यदा येनावयवेन मनसः संयोगः, तदा तदवयवावच्छेदेन प्रयत्नोत्पादो नान्यावयवावच्छेदेन। यदि मनसः प्रतिशरीरमने-

कत्वं स्यात्, तदा प्रतिशरीरमनेकावयवावच्छेदेनानेकेषां मनसां संयोगसम्भवादेकदा एकस्मिन्नात्मनि प्रयत्नद्वयोत्पादप्रसङ्गः। एकदा प्रयत्नद्वयाभावेऽपि अनेकावयवावच्छेदेन प्रयत्नजन्यानेकक्रियायौगपद्यप्रतीतिस्तु उत्पलशतपत्रव्यतिभेदयौगपद्यप्रतीतिवत् भ्रमरूपा मन्तव्या मनस आशुसञ्चारितया भाष्यादिभिरेव निर्वचनात् तदुपपत्तेः। मनसो नानात्वे एकस्य पुरुषस्य मनसामेकदैव चक्षुराद्यनेककरणसम्बन्धात् ज्ञानद्वययौगपद्यं दुरपह्नवं स्यादत एकमेव प्रतिशरीरं मनो यत्सम्बन्धासम्बन्धकृतौ तत्तदिन्द्रियादिजन्यज्ञानभावाभावौ न विरुध्येते इति तत्त्वम्। उक्तञ्चोपस्कारग्रन्थे शङ्करमिश्रैः—'यद्येकैकस्मिन्नपि शरीरे बहूनि मनांसि स्युस्तदा ज्ञानप्रयत्नानां यौगपद्यं स्यात्। यत्तु नर्त्तकीकरचरणाङ्गुलीषु युगपत् कर्म्मदर्शनाद् युगपदेव बहवः प्रयत्ना उत्पद्यन्त इति मतं. तदयुक्तं मनसः शीघ्रसञ्चारादेव तदुपपत्तेः, अविनश्यदवस्थयोग्यात्मविशेषगुणानां यौगपद्यानभ्युपगमात्' इत्यादि।

ततः संयोगविभागाविति—कारणसत्त्वे कार्य्यानुत्पादे व्यभिचारात् तथाभूतक्रियासत्त्वमेव संयोगविभागानुमापकमिति भावः।

परत्वापरत्ववदिति—दैशिकपरत्वापरत्ववदित्यर्थः। इतरयोः कालिकपरत्वापरत्वयोर्मनसि बाधस्य निरुक्तपूर्वत्वात्।

तत्प्रदर्शनपरमेवेति—न तु हेतुघटकतयापि तत् प्रविष्टमित्येवकारव्यवच्छेद्यम्, क्रियावत्त्वहेतोरेव मूर्त्तत्वाव्यभिचारेण द्रव्यानारम्भकत्वस्य प्रकृते व्यर्थविशेषणताप्रयोजकत्वादिति।

इति श्रीकालीपदतर्काचार्य्यकृतायां महामहोपाध्याय श्रीजगदीशतर्कालङ्कारकृत-द्रव्यभाष्यसूक्तिविवृतौ सूक्तिदीपिकायां द्रव्यग्रन्थः समाप्तः।

---

## ভাষ্যতাৎপর্য্য

যথাক্রমে অপরাপর সকল দ্রব্যই নিরূপণ করা হইয়াছে, এখন কেবল মনঃপদার্থই অবশিষ্ট আছে, সম্প্রতি উহা নিরূপিত হইতেছে। মনস্ত্বজাতির

সম্বন্ধ প্রযুক্তই মনকে ইতর বস্তু হইতে পৃথকৃরূপে বুঝিতে হইবে। উক্ত মন ইন্দ্রিয়গ্রাহ্য নহে, এই জন্য মনস্ত্বজাতিকেও অতীন্দ্রিয় জানিবে। আত্মার সহিত ইন্দ্রিয় ও ইন্দ্রিয়ের বিষয় উভয়েব সন্নিকর্ষ থাকিলেও জ্ঞানাদি কখনও হয় এবং কখনও হয় না দেখিতে পাওয়া যায়, কাজেই কেবল মাত্র আত্মা ও ইন্দ্রিয়াদির সম্বন্ধকেই জ্ঞানাদিব কাবণ বলিলে চলে না। যদি উহা বলা হয় তবে কারণ থাকিতে কার্য্যের উৎপত্তি না হইবে কেন? এই জন্যই অপর এমন একটী ইন্দ্রিয় মানিতে হইবে, যাহার সম্বন্ধ সহকারী থাকিলে জ্ঞানাদি উৎপন্ন হইবে, না থাকিলে হইবে না উহাই মনঃপদার্থ।

যৎকালে বহিবিন্দ্রিয়রূপে প্রসিদ্ধ শ্রোত্রাদিব ব্যাপার থাকে না, তৎকালেও স্মৃতি উৎপন্ন হইয়া থাকে, এই জন্য বহিরিন্দ্রিয় শ্রোত্রাদিভিন্ন একটী করণ অনুমিত হইতে পাবে। বহিরিন্দ্রিয়ের ব্যাপাব না থাকিলেও উক্ত মনোরূপ অন্তবিন্দ্রিয়েব ব্যাপারবশতই তৎকালে স্মৃতি হইবে। মনের ব্যাপার ও বহিরিন্দ্রিয়ের ব্যাপার কোনওরূপ ব্যাপার সে স্থলে কারণ বলিয়া না মানিলে অবিশেষে সর্ব্ব বস্তুরই স্মৃতির একদা আপত্তি হয়। মন স্বীকাব কবিলে যখন যে বিষয়ে মনোব্যাপাব সংস্কারেব সহকাবিতা প্রাপ্ত হয়, তখনই সেই বিষয়েব স্মৃতি হয়, অন্য বিষয়েব স্মৃতি হইতে পাবে না।

অন্য হেতুদ্বারাও মনেব অনুমান করা যায় যথা,—'অহং সুখী' ইত্যাদিরূপে সুখাদির প্রত্যক্ষ হইয়া থাকে, অথচ কোনও বহিবিন্দ্রিয়েব সুখাদির সহিত কোনও সম্বন্ধ নাই, কাজেই সুখের গ্রাহক একটী ইন্দ্রিয় কল্পিত হওয়ায় উহাই মনোরূপ অন্তঃকরণ বুঝিতে হইবে।

এইরূপে মনঃপদার্থ সিদ্ধ কবিয়া তাহাব গুণসম্বন্ধে আলোচনা করিতে গিয়া ভাষ্যকাব বলেন যে,—সংখ্যা, পবিমাণ, পৃথকৃত্ব, সংযোগ, বিভাগ, দৈশিক পরত্ব ও অপবত্ব, এবং বেগাখ্য সংস্কাব এই কয়টী মনের গুণ। উক্ত গুণবত্ত্ব হেতুদ্বারাই উহার দ্রব্যত্ব সিদ্ধ হইয়া থাকে। মন প্রতিশরীব ভেদে এক একটী। প্রতি-শবীরে অনেক মন স্বীকার করিলে একদা বহু মন বহুবিষয়ে সংযুক্ত হইতে পারায় আত্মাতে একদা বহু প্রযত্ন ও জ্ঞানের উৎপত্তি হইতে পারে, কিন্তু তাহা কখনও হয় না। আর প্রতিশরীরে এক একটী মন স্বীকার করিলে সেই একটী মন যখন যে শরীরাবয়বে সংযুক্ত থাকে, তখন সেই শরীবাবয়বাবচ্ছেদে আত্মার প্রযত্ন

ও যখন যে ইন্দ্রিয়েব সহিত সেই একটী মন সংযুক্ত থাকে, তখন সেই ইন্দ্রিয়জন্ম জ্ঞানমাত্রই উৎপন্ন হইতে পারে। কাজেই কোনওরূপ অতিপ্রসঙ্গাদি দোষ সম্ভব হয় না।

মনঃপদার্থ শরীরভেদে অনেক বলিয়া পৃথকৃত্ব ধর্ম্ম তাহাতে অবশ্যই আছে। মন অণু-পবিমাণ। পবমমহৎপরিমাণ বা মধ্যমপরিমাণ নহে। কাবণ মন বিভু অর্থাৎ পরমমহৎপবিমাণ স্বীকাব কবিলে একদা সর্ব্ববিষয়েব সহিত সম্বন্ধ থাকায় যুগপৎ অনেকবিধ জ্ঞানেব আপত্তি হয়। মধ্যমপরিমাণ স্বীকার করিলেও বহুবিষয়ের সহিত একদা সম্বন্ধ থাকায় উক্ত দোষ পরিহাব করা অসম্ভব হয় ও মনে অনিত্যত্বেব আপত্তি হয়।

মনে মূর্ত্তত্ব অর্থাৎ নিকৃষ্টপরিমাণবত্ত্ব আছে বলিয়া উহাতে পরত্ব অপরত্ব ও বেগাখ্যসংস্কাবও সিদ্ধ হইয়া থাকে। মূর্ত্তপদার্থ ব্যতীত ক্রিয়াবান্ হয় না, কাজেই মনেব ক্রিয়া আছে বলিয়াই মূর্ত্তত্ব সিদ্ধ হইয়া থাকে। উক্ত মনেব ক্রিয়া কোনও দ্রব্যেব আরম্ভক নহে।

সূত্রকাব মনেব অপসর্পণ উপসর্পণ প্রভৃতি দ্বাবা সংযোগ ও বিভাগ জ্ঞাপন কবিয়াছেন। মনের স্পর্শ না থাকায় উহা কোনও দ্রব্যেব সমবায়িকারণ নহে। মনেব চৈতন্য নাই, উহা অচেতন। মনেবও চৈতন্য স্বীকাব কবিলে শরীরকে যেমন আত্মাধিষ্ঠিত বলা হয ঐরূপ মনোঽধিষ্ঠিত স্বীকাব কবিতে হয়। তাহা হইলে চৈত্রেব আত্মা মনোরূপ অন্যবস্তুদ্বারা অধিষ্ঠিত শবীবে স্বেচ্ছায় প্রবৃত্তি নিবৃত্তি জন্য ক্রিয়া জন্মাইতে পাবে না। মৈত্রেব আত্মা দ্বারা অধিষ্ঠিত চৈত্রেব শরীবে চৈত্র কখনও স্বেচ্ছায় প্রবৃত্তি নিবৃত্তিজন্য ক্রিয়া উৎপাদন কবিতে পাবে না। অতএব আত্মা ও মন এই দুইটীকে চেতন ও শরীবাধিষ্ঠান বলা যায না। আর দুইটী চেতন দ্বাবা আত্মা অধিষ্ঠিত স্বীকাব করিলে একেব প্রবৃত্তি ও অন্যেব নিবৃত্তির ইচ্ছা হইতে পারায় বিরোধপ্রযুক্ত প্রবৃত্তি বা নিবৃত্তি কোনটীই হইতে পাবে না। অতএব মন জ্ঞানেব করণমাত্র জ্ঞানেব আশ্রয় নহে।

মন পরবৃত্তি জ্ঞানেব জনক হয়, অতএব উহা পরার্থ। উহাতে গুণবত্ত্ব আছে বলিয়া উহা দ্রব্য। মন অণুপরিমাণ অথচ গতিশীল বলিয়া অত্যন্ত শীঘ্রগামী, কাজেই ক্ষণকালের মধ্যে সুমেরু পর্ব্বতাদিতে মনের গতি সম্ভব হওয়ায় ‘মনসা মেরুং গচ্ছতি’ অর্থাৎ মনেব দ্বারা সুমেরু পর্ব্বতে যাইতেছে ইত্যাদি প্রয়োগ সঙ্গত

হয়। মনের ঐ শীঘ্রগামিত্বের প্রতি কোনও স্থলে আত্মার প্রযত্নবিশেষ ও কোনও স্থলে অদৃষ্টবিশেষই কারণ জানিবে। কাজেই অন্য বস্তুর সহিত পৃথক্‌রূপে ইহার আশুগতি অসঙ্গত নহে।

ইতি শ্রীকালীপদতর্কাচার্য্যকৃত প্রশস্তপাদভাষ্যতাৎপর্য্যে

দ্রব্যগ্রন্থ সমাপ্ত।

---

## मुद्राप्यमाणग्रन्थाः—

आनन्दलतिका—सनतोक-कृष्णनाथविरचितं काव्यम् ।

यात्रातत्त्वम्—रघुनन्दनभट्टाचार्य्यविरचितम् ।

### मुद्रापणार्थं गृहीता ग्रन्थाः—

छान्दोग्यमन्त्रभाष्यम्—सायणपूर्व्ववर्त्ति गुणविष्णुकृतम् ।

ऋग्वेदप्रातिशाख्यम्—शौनककृतम् ।

प्रमेयरत्नावली—बलदेवविद्याभूषणकृता गौड़ीयवैष्णवदर्शन-
प्रकरणग्रन्थरूपा ।

मङ्गलवादः—गदाधरभट्टाचार्य्यकृतः ।

समन्वयावृत्तिः—अनुपनारायणशिरोमणिकृता ब्रह्मसूत्रवृत्तिः ।

## संस्कृतसाहित्यपरिषद्ग्रन्थमाला

| | मूल्यम् | |
|---|---|---|
| | साधारणानाम् | सदस्यानाम् |
| **कालीतन्त्रम्**—सटीकानुवादम् | ॥४० | ॥० |
| **शङ्करीसङ्गीतम्**—शङ्करीविषयकं गीतगोविन्दानुकरण-काव्यम् | ।४० | ।० |
| **मुक्तिवादः**—गदाधरभट्टाचार्य्यविरचितः टीकाद्वय-भाषानुवादसहितः | २) | १॥० |
| **दुर्गोत्सवतत्त्वम्**—रघुनन्दनभट्टाचार्य्यकृतम् शारदीयदुर्गोत्सव प्रमाणप्रयोगतत्त्वरूपम | ३।० | ३ |
| **पितृदयिता**—अनिरुद्धभट्टकृता सामवेदीय-सन्ध्याश्राद्धादिपद्धतिरूपा | १।० | १) |
| **दुर्गोत्सवनिबन्धकदम्बम्**—दुर्गोत्सव-विवेकादिग्रन्थपञ्चकात्मकम् | ॥० | ।४० |
| **कारकोल्लासः**—भरतमल्लिककृतः सोदा-हरणकारकनिर्णयरूपः | ४० | ४० |
| **ऋग्वेदभाष्योपक्रमणिका**—सायणकृता आङ्गलभाषाटिप्पणसमेता | ॥॥० | ॥४० |
| **ग्रहयागतत्त्वम्**—रघुनन्दनभट्टाचार्य्यकृतम् | ।४० | ।४० |
| **प्रभाकरविजयः**—नन्दीश्वरविरचितः प्रभाकरसम्प्रदायानुसारि-मीमांसाग्रन्थः । | १।० | १) |
| **तीर्थतत्त्वम्**—रघुनन्दनभट्टाचार्य्यविरचितम् । | ।४० | ।४० |
| **पवनदूतम्**—टिप्पनीपाठान्तरादिभिः समलङ्कृतम् । धोयीकवि-कृतम् । | ॥॥० | ॥४० |
| **नलदमयन्तीयम् ( नाटकम् )**—परिषदाचार्य्य--श्रीकालीपद तर्काचार्य्यकृतम् । | १।० | १) |
| **प्रशस्तपादभाष्यम्**—जगदीशसूक्तिसहितम्, सम्पादककृतया सूक्तिदीपिकया भाषाभाष्येण च समलङ्कृतम् | २) | १॥० |